# मुड़-मुड़ के देखे संसार
# सुपर रिन की चमकार !




**सुपर रिन की चमकार ज़्यादा सफ़ेद -**

किसी-भी अन्य डिटर्जेंट टिकिया या बार से ज़्यादा सफ़ेद

हिन्दुस्तान लीवर का एक उत्कृष्ट उत्पादन

# स्वस्थानविवेकः

**सत्यपि भेदापगमे नाथ! तवाहं न मामकीनस्त्वम्।**
**सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥**

अद्वैतप्रतिपादकाः शङ्कराचार्याः वदन्ति- "भगवन्! अहं भवान् च अभिन्नौ। आत्मस्वरूपिणोः आवयोः भेदः नास्ति। एवं तर्हि अहं भवदीयः वा? भवान् मदीयः वा? इति प्रश्ने कृते, अहम् एव भवदीयः, न भवान् मदीयः। समुद्रतरङ्गयोः अभेदः लोकप्रसिद्धः। तरङ्गैः विना न समुद्रः। समुद्रं विना न तरङ्गाः। एवं तर्हि समुद्रस्य तरङ्गाः वा? तरङ्गाणां समुद्रः वा? न कोऽपि वदति- तरङ्गाणा समुद्रः इति। अगाधः गम्भीरः समुद्रः क्व? चञ्चलाः क्षणिकाः असङ्ख्याः तरङ्गाः क्व? यद्यहं भवान् मदीयः इति वदेयं तर्हि तत् मम अल्पत्वं द्योतयति। अहं भवदीयः इति वचनं तु मम अभिमानास्पदम्" इति।

अद्वैतविचारः यः कोऽपि भवतु नाम। पूर्वोक्ते श्लोके व्यावहारिकं कटुसत्यं यदुक्तं आचार्यैः तत् स्वीकुर्मः वयम्। स्वस्थानविवेकः कथं मधुरं प्रतिपादितः तैः!

जगति बहूनाम् अनर्थानां मूलं स्वस्थानविवेकराहित्यम्। स्वस्थानस्य पावित्र्यं स्वयोग्यतायाः स्वरूपं च अजानन्तः (विस्मरन्तः वा) बहवः भ्रष्टताम् आचरन्ति। गान्धीजि वदति- 'जगतः पापं लोपं वा निवारयितुम् इच्छन् भवान् प्रथमम् आत्मावलोकनं करोतु, येन जगति पापिषु अन्यतमः न्यूनः भवेत्' इति।

यः आत्मनः स्थानं निश्चेतुं प्रभवति सः एव व्यवहारे औचित्यम् आनेतुम् अपि प्रभवति। सः एव लोके पूज्यते, यश्च कालोचितम् आत्मोचितं च व्यवहरति। यः स्थानोचितं व्यवहरति तस्मै तत्स्थानसम्बन्धितया स्थिताः अधिकारगौरवादयः उन्नतिसाधनानि भवन्ति। तान्येव तस्मै अवनतिकारणानि भवन्ति, यश्च स्वस्थानं सम्यक् विवेक्तुं न शक्नोति।

# सङ्ख्यापठनम्

शिष्यः - श्रीमन् ! सङ्ख्याविषये मम इतोऽपि केचन प्रश्नाः सन्ति ।

आचार्यः - पृच्छतु तावत् । तत्र किमर्थं सङ्कोचः ?

शि - एतावता एव बहु उक्तम् । इतोऽपि कथने भवतः खेदः यदि न स्यात्....

आ - श्रोता भवान् सिद्धः अस्ति । एवं स्थिते कथने मम कः क्लेशः ? निस्सङ्कोचं पृच्छतु ।

शि - १९८६ इति सङ्ख्यां वयं षडशीत्युत्तर-नवशतोत्तर-एकसहस्रम् इति पठामः ।....

आ - परम्परानुगुणः क्रमः एषः ।

शि - किन्तु व्यवहारे इतर-भाषासु दक्षिणतः वामं (from right to left) पठन्ति, न तु वामतः दक्षिणम् ।

आ - भवतु, तेन किं नः छिन्नम् ?

शि - अस्माकं तु बाल्यादारभ्य संस्कारः दक्षिणतः वामं पठनम् । अतः संस्कृतसङ्ख्या-पठने क्लेशम् अनुभवामः । उक्तायाः दीर्घसङ्ख्यायाः लेखने तु....

आ - एवं तर्हि बाल्यतः आरभ्य एव संस्कृतसंस्कारः दातव्यः ।

शि - कालान्तरे फलेत् एषः स्वप्नः । सद्यःकालीनक्लेशस्य परिहारार्थं कालानुगुणं किमपि....।

आ - भवदुक्तं युक्तम् एव । वस्तुतः वामतो दक्षिणम् इति क्रमः इतरक्रमाणाम् अपेक्षया वैज्ञानिकः । यतः (अ) वयं लिखितां सङ्ख्यां दृष्ट्वा अङ्कानां स्थानं गणयामः, (वामतो दक्षिणम्) (आ) पुनः दक्षिणतः वामं पठामः– एवम् इतरभाषासु सोपानद्वयम् । संस्कृते तु यथा गणनं तथैव पठनम् इति एकेनैव प्रयत्नेन (वामतः दक्षिणं) गणनं पठनम्- उभयम् अपि साधयितुं शक्नुमः ।

शि - वामतः दक्षिणम् इति क्रमः वैज्ञानिकः वा न वा इति तु भिन्नः विषयः। तथा क्रमे असहजता अनुभूयते इति तु सत्यम्।

आ - एवं तर्हि कालिकी आवश्यकता अस्ति चेत् दक्षिणतः वामं पठितं चेत् न अपराधाय। यथा १९८६=एकसहस्र-नवशत-षडशीतिः।

शि - अत्र व्याकरणानुग्रहः स्यात् वा ?

आ - व्याकरणानुग्रहः कुतः न स्यात् ? मध्यमपदलोपिसमासम् आश्रित्य साधुत्वं साधयितुं शक्यते एव। किन्तु वस्तुतः एतादृशे स्थले व्याकरणानुग्रहः न प्रमाणम्। कालिकी आवश्यकता, पूर्वप्रयोगप्रामाण्यं चापि अपेक्षितम्। साधुत्वसम्पादनार्थं व्याकरणे बहवः मार्गाः भवन्ति एव। सन्तीति कारणतः सर्वे मार्गाः न अनुसरणीयाः। आवश्यकं चेत् (अनिवार्यं चेत् वा) मार्गस्य अनुसरणे न भेतव्यम् अपि।

शि - दक्षिणतः पठने प्रयोगप्रामाण्यं किमपि अस्ति वा ?

आ - द्वित्राणि प्रमाणानि सन्ति। यथा-

हेमाद्रिपुराणे महासङ्कल्पे- 'चतुर्लक्ष-द्वात्रिंशत्- सहस्राणां' (४३२०००)

दीधितिकारः 'दशसहस्राणि चतुःशतानि चत्वारः च' (१०४०४)

शि - एवं तर्हि द्वादशसहस्र-नवशत-दश (१२९१०) इति वक्तुं शक्नोमि एव ?

आ - किमर्थं न ? सौलभ्यदृष्ट्या एवं कथनम् अनिवार्यम् अपि।

शि - दूरवाणीसंख्या-कथनसमये Six - Five - Nine - Seven - Nine - Eight (659798) इति क्रमेण वदामः। तथैव संस्कृते अपि षट्-पञ्च-नव-सप्त-नव-अष्ट इति वक्तुं शक्यते वा ?

आ - तथा कथने कः दोषः ? तत्र केवलं अङ्काः (Digits) उच्चार्यन्ते–षट्-पञ्च···· इति क्रमेण। न हि तत्र तेषाम् अङ्कानाम् आनुपूर्वी अपेक्षिता। अतः एवं कथनं न दोषाय।



# चन्दमामा

एप्रिल – १९८६

*

अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-५०

वार्षिकं ग्राहकशुल्कम् रू. ३०-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

कोहिनूरुवज्रसम्बन्धे काचित् कथा श्रूयते- पूर्वं कश्चन वज्रवणिक् आसीत्। अमूल्यरत्नानि सङ्ग्रहणीयानि इति तस्य आशा। तदर्थं देशविदेशेषु प्रवासः करणीयः किल? अतः सः स्वकीयाम् भूमिम् कस्मैचित् कृषिकाय अल्पमूल्येन दत्त्वा रत्नान्वेषणार्थं विदेशं गतवान्।

यत् लब्धं तेनैव सन्तुष्टः कृषिकः काले कर्षणम् आरब्धवान्। यदा गभीरं कर्षणं कृतं तदा तेन भूमौ काऽपि चाकचक्यसहिता शिला प्राप्ता। वज्रपरीक्षकाः उक्तवन्तः- 'एतत् वज्रम्' इति। तदेव वज्रं कालान्तरे 'कोहिनूरु'नाम्ना ख्यातम् अभवत्।

वज्रान्वेषी वणिक् यत्र अमूल्यवज्रम् आसीत् तां भूमिं विक्रीय वज्रान्वेषणार्थं गतवान्। कृषिकः तु निरायासेन तत् वज्रं प्राप्तवान्।

संस्कृतस्य महत्त्वम् असदृशम्। यदि वयं तस्य रक्षणे वर्धने च प्रयत्नं पर्याप्तमात्रेण न कुर्मः तर्हि कालान्तरे वज्रवणिजा इव अस्माभिः अपि पश्चात्तापः अनुभोक्तव्यः भवेत्।

सम्पुटः- ३ एप्रिल्- ८६ सञ्चिका- १

प्रतिकृतिमूल्यम्- रू. २-५० वार्षिकं ग्राहकशुल्कम्- रू. ३०/-






रसप्रश्नाः–

# एते के?

(अत्र केचन पुराणेतिहासप्रसिद्धाः पुरुषाः उल्लिखिताः सन्ति । तेषां परिचय-प्राप्त्यर्थं विकल्पत्रयं सूचितम् अस्ति । युक्तस्य उत्तरस्य अन्वेषणं कुर्वन्तु ।)

I भगीरथः - १. भागीरथ्याः पुत्रः २. दिलीपस्य पुत्रः
३. सगरस्य पिता ।

II अष्टावक्रः - १. श्वेतकेतोः पिता २. विकाररूपः भिक्षुकः
३. उद्दालकमुनेः पौत्रः

III अश्वपतिः - १. कैकेय्याः पिता २. दशरथस्य आस्थाने अश्वसेनापतिः ३. श्रेष्ठः अश्वः

IV पराशरः - १. वशिष्ठस्य पुत्रः २. वशिष्ठस्य पौत्रः
३. धनुर्विद्याप्रवीणः सेनापतिः

V कौत्सः - १. पुरुकुत्सस्य पिता २. भृगुवंशीयः ब्रह्मर्षिः
३. रघुमहाराजस्य पुरोहितः

VI जनमेजयः - १. व्यासस्य पिता २. जनकराजस्य पिता
३. परीक्षिद्राजस्य पुत्रः

VII रन्तिदेवः - १. संकृतिराजस्य पुत्रः २. रन्तिनामिकायाः स्त्रियः पतिः ३. पाण्डवानां पितामहः

VIII ययातिः - १. देवयान्याः पुत्रः २. सूर्यवंशीयः चक्रवर्ती
३. नहुषराजस्य पुत्रः

IX मान्धाता - १. चतुर्दशमनुषु अन्यतमः २. यवनाश्वस्य पुत्रः
३. यवनाश्वस्य पिता

X सुग्रीवः - १. रुमायाः पतिः २. हनूमतः अग्रजः
३. जाम्बवतः पुत्रः

उत्तराणि – I-२ II-३ III-१ IV-२ V-२
VI-३ VII-१ VIII-३ IX-२ X-१

# रसवार्ताः



## अतिदूरस्थं नक्षत्रमण्डलम्

अमेरिकादेशीयाः खगोलविज्ञानिनः सामान्यतः १४.५ लक्ष-कोटि कान्तिवर्षदूरे स्थितं नक्षत्रमण्डलम् अन्विष्टवन्तः सन्ति। बार्क्ली विश्वविद्यालयीयः प्रो॥ बैरन् स्पिनूराड एतां वार्ता निवेदयन् 'भूमितः अतिदूरे स्थितं नक्षत्रमण्डलम् एतत् एव' इति स्वाभिप्रायं प्रकटितवान्।

## करुणालुः गजेन्द्रः

आन्ध्रप्रदेशे चित्तूरुमण्डले कदाचित् कृषिकः इक्षुवाटिकां परिरक्षन् वाटिकायाम् इक्षुदण्डान् खादन्तम् एकं गजं दृष्टवान्। तं महिषं मन्यमानः दण्डेन ताडितवान् च। कुपितः गजः एतं शुण्डया उन्नीय क्षेप्तुम् उद्युक्तः अभवत्। किन्तु यदा वृद्धः सः नमस्कारपूर्वकम् आत्मनः रक्षणं प्रार्थितवान् तदा गजः करुणया तम् अधः अवातारयत्। ततः मौनम् अगच्छत् च।





## सङ्गीतसभायां नूतनः विक्रमः!

श्रीरङ्गदेवालये प्राङ्गणे प्रवृत्तायां सङ्गीतसभायां नूतनः विक्रमः उल्लिखितः अभवत्। तत्र नागै मुरलीधरन् नाम सङ्गीतविद्वान् २५ घण्टाः यावत् निरन्तरं वायलिन् वाद्यं वादितवान्। तेन सह के. राजारामन् मृदङ्गं वादितवान् च।

# भवन्तः जानन्ति वा?

१. सर्वप्रथमम् उत्तरध्रुवप्रान्तं कः प्राप्तवान्?
२. कः दक्षिणध्रुवप्रान्तं प्रप्रथमं प्राप्तवान्?
३. 'न्यूजील्याण्ड्' कः अन्विष्टवान्?
४. एकेन एव यात्राप्रयासेन समग्रप्रपञ्चस्य परिक्रमणं सर्वप्रथमं कः कृतवान्?
५. आफ्रिकाप्रयाणसन्दर्भे डेविड् लिविङ्ग्स्टोन् महोदयः कञ्चित् सुप्रसिद्धं जलपातम् अन्विष्टवान्। तस्य नाम किम्?

(उत्तराणि ६५तमे पृष्ठे)

# अनसूया

अत्रिमहामुनेः पत्नी अनसूया। सा परमपतिव्रता वात्सल्यमयी च। सर्वान् अपि प्रीत्या पश्यन्ती सा जनप्रिया आसीत्।

तस्याः पातिव्रत्यं मातृवात्सल्यं च जगति परिचाययितुम् इच्छन्तः ब्रह्मविष्णुमहेश्वराः कदाचित् ब्राह्मणवेषेण अत्रिमुनेः आश्रमम् आगतवन्तः। अनसूया श्रद्धया भक्त्या च तान् अतिथीन् सत्कृत्य आगमनकारणं पृष्टवती।

"भवत्याः गृहे विश्रान्तिः स्वीकरणीया इति उद्देशेन वयम् अत्र आगतवन्तः। भवती अस्मान् अङ्के स्वीकृत्य लालयतु। एषा एव अस्माकम् इच्छा" इति ते उक्तवन्तः एकस्वरेण।

तदा अनसूया मन्दहासं प्रकटयन्ती- "तथैव अस्तु। भवताम् अभीष्टं पूरयामि" इति उक्त्वा तेषाम् उपरि मन्त्राक्षताः स्थापितवती।

अपरक्षणे ते त्रयः अपि शिशुरूपेण परिवृत्ताः। अनसूया वात्सल्येन एकैकम् अपि उन्नीय अङ्के लालयन्ती मातृप्रेम्णा क्षीरं पाययित्वा आन्दोलिकायां शायितवती।

अनसूयायाः माहात्म्येन मुग्धाः त्रिमूर्तयः नैजस्वरूपं धृत्वा अपेक्षितं वरं प्रष्टुम् उक्तवन्तः। 'भवन्तः त्रयः अपि मम पुत्रत्वेन जन्म प्राप्नुवन्तु' इति प्रार्थितवती सा। अनन्तरकाले तस्याः गर्भतः ब्रह्मांशेन सोमः, विष्णोः अंशेन दत्तात्रेयः, शिवस्य अंशेन दूर्वासाः च उत्पन्नाः।

कालान्तरे सीता रामः लक्ष्मणः च अत्रेः आश्रमस्य दर्शनं कृतवन्तः। तदा अनसूया सीतां नीतिधर्मान् उपदिश्य म्लानतारहितं पुष्पम् उपायनरूपेण दत्तवती।





# निजस्वरूपम्

चतुरङ्गपुरस्य राजा चन्द्रहासः। तस्य गुरुः रुद्राक्षः। रुद्राक्षस्य विषये चन्द्रहासस्य विशेष-गौरवम्। चन्द्रहासः यदा दायादकारणतः कष्टम् अनुभूतवान् तदा रुद्राक्षः उचितं मार्गं काले काले उपदिशन् सिंहासनरक्षणं कृतवान् आसीत्। अतः एव चन्द्रहासः रुद्राक्षं सदा कृतज्ञताभावेन पश्यति।

रुद्राक्षः आत्मानं सर्वसङ्गपरित्यागिनं मन्यते। किन्तु तस्य महान् अहङ्कारः। काषायवर्णस्य पीताम्बराणि एव सदा धरति। कण्ठे रत्नहारः विराजते। हस्ते सुवर्णकङ्कणं धरति सः। मन्त्रिणः, इतरान् उद्योगिनः च तिरस्कारदृष्ट्या पश्यति। पदे पदे वचनैः अवमानयति च। 'एषः महाराजस्य इष्टतमः' इति कारणतः कोऽपि विरोधं न प्रकटयति। किन्तु सर्वेषाम् अपि मनसि रुद्राक्षस्य विषये असमाधानम् आसीत् एव।

एकदा रुद्राक्षः चन्द्रहासम् उक्तवान्- "राजन्! भवान् मम विषये सर्वदा गौरवं प्रदर्शयति इति विषयं सर्वे जानन्ति एव। किन्तु एतं विषयं अस्माकम् अनन्तरीयाः जानीयुः किल? तदर्थं मम शिलाविग्रहः किमर्थं वा नगरमध्यभागे चतुष्पथे न स्थापनीयः? एवं कृतं चेत् भवान् मम विषये गौरवं यत् प्रदर्शयति तत् जगद्विख्यातं भविष्यति। 'ज्येष्ठाः गौरवभावेन द्रष्टव्याः' इति एतम् आदर्शं सदा स्मारयिष्यति सः विग्रहः" इति।

चन्द्रहासः एतत् अङ्गीकृतवान्। मन्त्रिणं मार्ताण्डम् आहूय रुद्राक्षस्य अभिलाषं निवेद्य उक्तवान्- "प्रथमं भवान् एतद्विषये शिल्पिनाम् अभिप्रायं सङ्गृह्णातु। अनन्तरं समर्थं शिल्पिनम् एतत्कार्ये योजयिष्याम। गुरुवर्याणाम् आगामिजन्मदिनोत्सवतः पूर्वम् एषः विग्रहः



सिद्धः भवेत्। जन्मदिनोत्सदिने एव विग्रह-प्रतिष्ठापनम् अपि प्रचलिष्यति'' इति।

मार्ताण्डः आस्थानचित्रकारद्वारा रुद्राक्षस्य प्रतिरूपं लेखितवान्। अनन्तरं तत् चित्रं अवन्तिनगरस्य प्रसिद्धशिल्पिनः मल्लाचार्यस्य समीपं प्रेषितवान्।

चित्रेण सह एकं पत्रम् अपि मार्ताण्डेन प्रेषितम् आसीत्। पत्रे लिखितम् आसीत् यत् ''मल्लाचार्यवर्य ! एतच्च चित्रम् अस्माकं महाराजस्य गुरुवर्यस्य रुद्राक्षस्य। यावच्छीघ्रम् एतस्य विग्रहः निर्मातव्यः। शिल्पनिर्माण-सन्दर्भे एकः विशेषांशः मनसि भवतु यत् राजगुरुः रुद्राक्षः महाविद्वान् सर्वसङ्गपरित्यागी च इति।''

रुद्राक्षस्य जन्मदिनोत्सवतः पूर्वम् एव मल्लाचार्यः विग्रहं निर्माय चतुरङ्गपुरम् आगत्य मन्त्रिणः मार्ताण्डस्य हस्ते अर्पितवान्।

मन्त्री एतां वार्तां महाराजाय निवेदितवान्। एतत् श्रुत्वा महाराजः अतीव सन्तुष्टः। ''गुरुवर्याणां जन्मदिनोत्सवदिने अहम् एव एतं विग्रहं प्रतिष्ठापयिष्यामि। तावत्पर्यन्तम् एषः विग्रहः रहसि स्थापनीयः'' इति सः आज्ञापितवान्।

रुद्राक्षस्य जन्मदिनोत्सवः अपि उपस्थितः। तद्दिने मङ्गलवाद्यघोषपूर्वकं चन्द्रहासः विग्रहस्य उपरि स्थापितं वस्त्रावरणम् अपसारितवान्। विग्रहं क्षणकालं दृष्ट्वा क्रुद्धः रुद्राक्षः आक्रोशनं कृतवान्- ''एतत् किं मम प्रतिरूपम्? तिल-मात्रम् अपि साम्यं नास्ति। कोऽयं वेषभूषः? सर्वथा विरूपं शिल्पम् एतत्'' इति।

एतत् श्रुतवतः महाराजस्य मुखं म्लानम् अभवत्। सः मुख्यमन्त्रिणः मार्ताण्डस्य मुखं प्रश्नार्थकदृष्ट्या दृष्टवान्।

तदा मार्ताण्डः विनयेन उक्तवान्- ''प्रभो! प्रसिद्धेन शिल्पिना मल्लाचार्येण निर्मितं शिल्पम् एतत्। अपूर्वाणि सुन्दराणि शिल्पानि निर्माय सः कीर्तिं सम्पादितवान्। इदानीं कीर्त्या उन्मत्तः इति मन्ये। अहङ्कारेण एतं विग्रहं प्रायः निर्मितवान्। तं मुखतः दृष्ट्वा सर्वं ज्ञापयिष्यामि'' इति। तत्क्षणे एव सेवकद्वारा

मल्लाचार्यम् आनायितवान् ।

मल्लाचार्यः त्वरया आगत्य महाराजं नमस्कृत्य स्थितवान् । तदा राजा पृष्टवान्- "भवान् सुप्रसिद्धः शिल्पी स्यात् नाम । किन्तु गुरुवर्याणां शिल्पस्य निर्माणे भवान् सर्वथा असफलः । 'विग्रहस्य स्वरूपस्य च साम्यम् एव नास्ति' इति गुरुवर्याः वदन्तः सन्ति । किम् उत्तरं भवतः ?" इति ।

मल्लाचार्यः आश्चर्यम् अनुभवन् मन्त्रिणम् एकवारं प्रश्नार्थकदृष्ट्या दृष्ट्वा महाराजम् उक्तवान्- "प्रभो ! मन्त्रिवर्येण यत् चित्रं प्रेषितं तत् दृष्ट्वा एव एतं शिल्पं निर्मितवान् । मन्त्रिवर्येण चित्रेण सह एकं पत्रं स्थापितम् आसीत् । तत्र लिखितम् आसीत् यत् गुरुवर्यः विद्वान् सर्वसङ्गपरित्यागी च । शिल्पनिर्माणसन्दर्भे एषः विषयः विशेषतया स्मर्तव्यः इति । तदनुगुणं मया शिल्पं निर्मितम्" इति ।

"मल्लाचार्येण यत् उक्तं तत् सत्यम् एव । गुरुवर्यस्य स्वरूपं मया तत्र सूचितम् आसीत्" इति उक्तवान् मार्ताण्डः ।

"सर्वसङ्गपरित्यागिनः महापुरुषस्य रूपं कथं भवति इति अहं जानामि एव । अतः एव विग्रहस्य मुखे प्रशान्तता, वेशभूषे निराडम्बरता, कण्ठे रुद्राक्षमाला इत्यादयः स्थापिताः । स्वभावानुगुणं व्यवहारः लोकसहजः । तदस्तु नाम, मां क्षाम्यतु भवान् । अचिरात् एव गुरुवर्यस्य यथार्थं शिल्पं निर्माय प्रेषयिष्यामि" इति प्रार्थनापूर्वकम् उक्तवान्



मल्लाचार्यः ।

"तथैव अस्तु । यावच्छीघ्रं योग्यं शिल्पं निर्माय प्रेषयतु" इमि उक्तवान् महाराजः ।

मल्लाचार्यः महाराजं नमस्कृत्य ततः निर्गन्तुं प्रवृत्तः ।

तदा रुद्राक्षः तस्य गमनं निवारयन् महाराजम् उक्तवान्- "महाराज ! विग्रहे किमपि परिवर्तनं न अपेक्षितम् । परिवर्तनं तु मयि अपेक्षितम् । अन्यच्च नगरमध्ये एवं सत्रैभवं विग्रहस्य प्रतिष्ठापनस्य अपि आवश्यकता नास्ति" इति ।

तस्य वचनं श्रुत्वा सर्वे आश्चर्यम् अनुभवन्तः आसन् । तदा रुद्राक्षः पुनः उक्तवान्- "महाराज ! अलौकिके विषये अहं किञ्चित् ज्ञानं सम्पादितवान् स्याम् । किन्तु लौकिके व्यवहारे अहम् अज्ञः एव । अनुचितं व्यवहरन् अहं बहूनां खेदस्य कारणीभूतः अभवम् । मम निजस्वरूपम् तिरोहितं जातम् आसीत् । एषः विषयः भवत्सुः बहुभिः लक्षितः स्यात् एव" इति ।

सर्वे रुद्राक्षस्य वचनं मौनं शृण्वन्तः आसन् । रुद्राक्षः पुनः अपि मन्दहासपूर्वकम् उक्तवान्- "राजन् ! चतुरः मार्ताण्डः मल्लाचार्यद्वारा एतादृशं शिल्पं निर्माय तिरोहितं मम निजस्वरूपं प्रकाशे आनीतवान् । एतादृशः समर्थः मन्त्रिवर्यः भवतः अस्ति । एवं स्थिते मम आवश्यकता का अत्र ? भवतः कर्मकराः अपि सुयोग्याः एव । इदानीं प्रकटीभूतं मम निजस्वरूपं पुनः तिरोहितं यथा न भवेत् तथा कर्तुं भगवदाराधनम् एव युक्तः मार्गः । अहं भगवन्तं ध्यायन् तीर्थयात्रां करिष्यामि । यद्यपि मम गमनेन भवतां मनसि दुःखं कदाचित् भवेत् । किन्तु तत् न शाश्वतम् । अतः कोऽपि अत्र विरोधं न वदतु" इति ।

अनन्तरदिने एव रुद्राक्षः आडम्बरपूर्णं वेषं परित्यज्य शिल्पिनः शिल्पे यत् स्वरूपम् आसीत् तथैव सरलं वेषं धृत्वा तीर्थयात्रार्थं प्रस्थितवान् ।





# लोभी वणिक्

रामपुरग्रामस्य पार्श्वे कस्मिंश्चित् उद्याने आनन्दस्वामी नाम योगिवर्यः आसीत्। तस्य बहवः शिष्याः। तेषु केचन वस्तुतः जिज्ञासवः। अन्ये केचन लौकिकचर्चासु केवलम् आसक्तिमन्तः। तथापि आनन्दस्वामी तेषु भेदभावम् अगणयन् सर्वान् शान्तमयं सरलं च जीवनम् उपदिशति स्म।

आनन्दस्वामिनः शिष्येषु शान्तारामः नाम वणिक् अपि अन्यतमः। शान्तारामः महाकृपणः लोभी च। सः प्रतिमासं सहस्रशः रूप्यकाणि सङ्गृह्णाति। किन्तु एकस्याः वराटिकायाः व्ययम् अपि न करोति। कदापि कमपि भोजनार्थं न आह्वयति। धार्मिककार्यार्थम् अन्यकार्यार्थं वा किमपि न ददाति अपि।

शान्तारामस्य मनः सर्वदा अशान्तम् अस्वस्थं च तिष्ठति। एतस्य एतादृशीं परिस्थितिं दृष्ट्वा आनन्दस्वामी कदाचित् पृष्टवान्- "किं भोः! भवान् सर्वदा अप्रसन्नः एव दृश्यते? भवन्तं हसन्तं कदापि न दृष्टवान् अहम्। किमर्थम्?" इति।

एतत् श्रुत्वा शान्तारामः चिन्तापूर्णस्वरेण उत्तरं दत्तवान्- "साधुमहाराज! प्रसन्नतायै किमपि कारणम् अपेक्षितं किल? समग्रं जगत् दुष्टैः पूर्णम् अस्ति। यावत् श्रमं करोमि चेदपि अहं श्रमानुरूपं फलं न प्राप्नोमि" इति।

आनन्दस्वामी उक्तवान्- "भवान् अनावश्यकं चिन्ताग्रस्तः अस्ति। अस्मिन् लोके किं निर्धनाः न सन्ति? ते किं विद्यमानेन एव तृप्तिं न अनुभवन्ति? भवान् अपि यदि भवतः चिन्तनपद्धतिं परिवर्तयति तर्हि सुखेन स्थातुम् अर्हति" इति।

शान्तारामः स्वामिनः सर्वाणि वचनानि



भक्तिपूर्वकं श्रृणोति, किन्तु न आचरति। अतः पूर्वं यथा आसीत् तथैव अस्ति सः। न किमपि परिवर्तनं, न वा कापि प्रगतिः।

कानिचन दिनानि गतानि। आनन्दस्वामी रोगेण शय्याम् आश्रितवान्। सः स्वशिष्यान् आहूय उक्तवान्- ''इदानीं मम अन्तिमकालः सन्निहितः अस्ति। भवन्तः सुखिनः स्वस्थाः सन्तुष्टाः च सन्तु इति मम आशा। भवन्तः भगवति श्रद्धां विश्वासं च स्थापयन्तु। तदा भवताम् अभीष्टं निश्चयेन सिध्यति। भवत्सु कोऽपि मत्समीपतः किमपि ज्ञातुमिच्छति चेत् एकान्ते आगत्य मां पश्यतु'' इति।

गुरोः शरीरपरिस्थितिं दृष्ट्वा अन्तिमकालं समीपम् आगतं च श्रुत्वा सर्वे शिष्याः शोकसागरे निमग्नाः। सर्वे स्वामिनम् एकान्ते एकैकशः दृष्टवन्तः। तदीयम् आशीर्वादं प्राप्य बहिः आगतवन्तः च।

अन्ते लोभी शान्तारामः स्वामिनः समीपं गत्वा उक्तवान्- ''गुरुवर्य! अहं भवन्तं यत् प्रार्थयामि तत् यथा सिध्येत तथा करोमि इति प्रथमम् आश्वासनं ददातु'' इति।

आनन्दस्वामी शान्ततया शयनं कर्तुम् इच्छति स्म। एतं लोभिनं शान्तारामं शीघ्रं बहिः प्रेषयितुम् इच्छन् सः किमपि अनुक्त्वा केवलं मौनं शिरः चालितवान्।

शान्तारामः पुनः उक्तवान्- ''स्वामिन्! भवतः आत्मीयः शिष्यः कदाचित् उक्तवान् यत् भवतः समीपे अपूर्वाः शक्तयः सन्ति इति। भवान् लोहं सुवर्णं कर्तुम् अपि जानाति इति अहं श्रुतवान्। तया विद्यया माम् अनुगृह्णातु'' इति।

शान्तारामस्य एतां विचित्राम् इच्छां श्रुत्वा आनन्दस्वामी चकितः खिन्नः च। सः शान्तस्वरेण उक्तवान्- ''मयि तादृशी शक्तिः अस्ति वा न वा इत्येषः अन्यः विषयः। भवान् भवत्प्रार्थितया शक्त्या सर्वथा व्याकुलितः भवति इति तु सत्यम् एव। अतः आत्मोन्नतिकारकं किमपि पृच्छतु, येन भवतः जीवनं शान्तमयं भवेत्'' इति।

''स्वामिन्! मया यत् पृष्टं तेनैव मम

हितं सिध्यति। एतस्याः शक्तेः प्राप्तेः अनन्तरं लोके मत्समानः कोऽपि न अवशिष्यते। सुवर्णप्राप्तिः एव सर्वसुखस्य मूलं कारणम्'' इति शान्तारामः उद्वेगेन उक्तवान्।

'एतस्मै उपदेशेन किमपि प्रयोजनं नास्ति' इति ज्ञातवान् आनन्दस्वामी। अतः तत्काले तं निवारयितुम् इच्छन् सः एकं मन्त्रम् उपदिश्य उक्तवान्- ''भोः! भवान् यं कमपि लोहं स्पृष्ट्वा एतं मन्त्रं जपतु। सः लोहः तत्क्षणे सुवर्णं भविष्यति'' इति।

शान्तारामः अतीव सन्तुष्टः सन् प्रकोष्ठतः बहिः आगतवान्।

किञ्चित्कालानन्तरम् आनन्दस्वामी दिवङ्गतः। इतरे शिष्याः सर्वे शोकसागरे निमग्नाः सन्ति चेत् एषः शान्तारामः आनन्दलोके विहरति! एतत् दृष्ट्वा इतरे शिष्याः चिन्तितवन्तः यत् गुरुवर्यः एतं विशेषमन्त्रम् उपदिष्टवान् स्यात्। भगवतः प्राप्तौ सुलभं मार्गम् उपदिष्टवान् स्यात्। शान्तारामः एव भाग्यशाली। वयं तु भाग्यहीनाः। शान्तारामस्य कोऽपि विशेषगुणः गुरुवर्येण दृष्टः स्यात् इति।

एकः सप्ताहः अतीतः। 'विपण्यां विद्यमानाः सर्वे लोहाः स्वीकरणीयाः' इति शान्तारामः चिन्तितवान्। अतः विपणिं गत्वा लोहस्य मूल्यं पृष्टवान्। आपणिकेन यत् मूल्यम् उक्तं तत् अधिकम् इति भावना उत्पन्ना शान्तारामस्य मनसि। अतः सः तद्दिने तथैव प्रत्यागतवान्।



शान्तारामः एकसप्ताहानन्तरं पुनः विपणिं गत्वा लोहस्य मूल्यं पृष्टवान्। तदानीम् अपि मूल्म् अधिकम् एव। बहूनि दिनानि यावत् मूल्ये कोऽपि भेदः न लक्षितः। "कथञ्चित् लोहेन अमूल्यं सुवर्णं निर्मीयते। एवं तर्हि अधिकमूल्येन लोहं क्रीणामि चेत् का हानिः?" इति चिन्तितवान् सः। पुनः अन्यः विचारः आगतः- "वृथा किमर्थम् आपणिकाय अधिकं मूल्यं ददामि?" इति।

एवम् एव वर्षद्वयम् अतीतम्। अनन्तरं कदाचित् लोहस्य मूल्ये अकस्मात् न्यूनता आगता।

लोभी वणिक् शान्तारामः तत्समये विपण्यां विद्यमानान् सर्वलोहान् क्रीतवान्। 'यदा एते सुवर्णानि भवन्ति तदा चौर्यं न भवेत्' इति दृष्ट्या गृहं परितः प्राकारं निर्मातुं सः निश्चितवान्। एतत्कार्यार्थं तद्दिने एव कर्मकरान् नियोजितवान्। इष्टिका सिकता काष्ठादीनां कृते यथेष्टं धनं व्ययितवान् अपि।

एवं सर्वं यदा सिद्धं तद्दिने सः लोहस्य राशेः पार्श्वे उपविश्य मन्त्रजपार्थं सिद्धः अभवत्। मन्त्रस्मरणार्थं सः बहुधा प्रयत्नं कृतवान्। किन्तु मन्त्रः स्मरणे न आगच्छति। हस्तेन शिरः ताडयन्, शिरसा भूमिं ताडयन् सः पुनः पुनः रोदनं कृतवान्। किन्तु प्रयोजनं किमपि न सिद्धम्।

वर्षद्वयं यावत् निरन्तरं लोहमूल्यस्मरणेन सः मन्त्रं सर्वथा विस्मृतवान् अस्ति। इदानीं परिस्थितिः तथा जाता अस्ति यत् मन्त्रस्य एकम् अक्षरम् अपि सः न स्मरति।

लोहसङ्ग्रहणचिन्तने मग्नः सः मन्त्रं कुत्रापि न लिखितवान् आसीत् अपि। अतः सः मन्त्रं ज्ञात्वा अपि समये तस्य लाभं प्राप्तुं न शक्तवान्।

अल्पे एव काले शान्तारामः मतिभ्रष्टः अभवत्। यावज्जीवं लोहराशिं सर्वदा स्पृशन् "सुवर्णं सुवर्णम्!" इति जपन् सः कालं यापितवान्।



# कांस्य-दुर्गम्



## १६

( चन्द्रवर्मण: कांस्यदुर्गगमनार्थं चन्द्रपुरस्य राजा शिवसिंह: साहाय्यं कृतवान् । चन्द्रवर्मा कैश्चित् अश्वारोहिभि:, कैश्चित् सैनिकै: च सह पश्चिमदिशम् अनुसृत्य प्रयाणम् आरब्धवान् । मार्गे तै: किञ्चन शिथिलं नगरं दृष्टम् । तत्रत्येन शिलाफलकेन चन्द्रवर्मा ज्ञातवान् यत् तस्य शिथिलनगरस्य नाम करवीरपुरम् इति । तत: ...... । )

करवीरपुरस्य सीमाम् अतिक्रम्य चन्द्रवर्मा तदनुयायिन: च अग्रे गतवन्त: । किञ्चिद्दूरं गमनानन्तरं तै: महापर्वतानां श्रेणी एव दृष्टा । एतस्या: पर्वतश्रेण्या: अतिक्रमणं कथम् इति महती समस्या तेषां पुरत: आगता । यत: पर्वतारोहणार्थम् कोऽपि मार्ग: न आसीत् । पर्वते सर्वत्र महाशिला: सान्द्राणि कण्टकसस्यानि च दृश्यन्ते स्म ।

अस्मिन् पर्वतप्रदेशे मार्ग: उपकल्प्येत चेदपि आहारवाहका: गर्दभा: तु पर्वतम् आरोढुं न शक्नुयु: एव । गर्दभा: परित्यक्ता: चेत् आहाराभाव: सम्मुखीकरणीय: । आहार: एव यदि न स्यात् तर्हि पर्वतारोहणेन किं प्रयोजनम् ? सुदीर्घप्रयाणार्थम् आहार: अत्यावश्यक: ।

चन्द्रवर्मा सहगामिन: उद्दिश्य उक्तवान्- "मित्राणि ! अग्रे प्रयाणं करणीयं चेत् गर्दभा: अत्रैव परित्यक्तव्या: । ते अत्रैव स्वेच्छया



चरन्तु नाम। अस्मासु एकैकेनापि यावत् शक्यते तावत् आहारभारः निर्वोढव्यः" इति।

एतत् श्रुत्वा असम्मतिं प्रकटयन्तः शिव-सिंहस्य सैनिकाः उक्तवन्तः- "पर्वतस्य अपर-पार्श्वे किम् अस्ति इति वयं न जानीमः। तत्र आहारः लभ्येत इत्यत्र अपि न विश्वासः। एवं स्थिते गर्दभानाम् उपरि स्थितस्य आहारस्य अधिकांशम् अत्रैव त्यक्त्वा गच्छामः चेत् मूर्खता आचरिता इव भवेत् किल ? अस्माभिः एकैकेन अपि दिनद्वयस्य आहारः नेतुं शक्येत, ततोऽपि अधिकं न। अनन्तरं तु आहाराभावतः क्लेशः अनुभोक्तव्यः एव। अतः एवं गमनेन अपि किं वा साधितं भवेत् ?" इति।

"स्वीकृतस्य कार्यस्य त्यागः तु नास्ति एव। एवं तर्हि गर्दभैः सह कथं वा अग्रे गन्तुं शक्नुमः ? आणि-रज्ज्वोः आधारेण अस्माभिः पर्वतारोहणं करणीयम्। तेन क्रमेण गर्दभान् नेतुं तु न शक्नुमः। अतः स्वशक्त्यनु-गुणम् आहारवस्तूनि स्वीकृत्य गच्छामः। अग्रे देवस्य अनुग्रहः यथा अस्ति तथा भविष्यति" इति दृढस्वरेण उक्तवान् चन्द्रवर्मा।

अनन्योपायाः सैनिकाः अर्धमनस्कतया इव चन्द्रवर्मणः प्रस्तावम् अङ्गीकृतवन्तः। गर्दभा-नाम् उपरि स्थितान् आहारपदार्थान् स्वशक्त्यनु-गुणं बद्धवन्तः। ततः पर्वतारोहणम् आरब्धम्।

प्रातःकाले आरब्धः पर्वतारोहणप्रयत्नः मध्याह्नपर्यन्तम् अपि निरन्तरम् अनुवृत्तः। मध्याह्नसमये ते पर्वतमध्यभागे विशालं प्रदेशं प्राप्तवन्तः। तत्रैव पाकं कृत्वा भुक्त्वा किञ्चित् कालं विश्रान्तिम् अनुभूतवन्तः। पुनः पर्वता-रोहणम् आरब्धवन्तः। सूर्यास्ततः पूर्वं ते सर्वे पर्वतशिखरं प्राप्तवन्तः।

सर्वप्रथमं चन्द्रवर्मा शिखरम् आरुह्य परितः दृष्टिं प्रसारितवान्। पर्वतस्य अपरपार्श्वे एकं नगरं दृष्ट्वा सः स्वसहचरान् आहूतवान्, नगरं प्रदर्शितवान् च।

तच्च एकं विशालं नगरम्। उन्नतानां भवनानाम् उपरि पतिताः सूर्यकिरणाः प्रति-फलिताः सन्तः उज्ज्वलतया प्रकाशन्ते स्म। नगरपार्श्वे पर्वतभागे फलपुष्पाणां वाटिकाः,

हरिद्वर्णेन शोभायमानानि धान्यक्षेत्राणि च विराजन्ते स्म। प्रथमदर्शनेन एव नगरस्य समृद्धिः ज्ञातुं शक्या आसीत्।

"एतस्य नगरस्य नाम किं?" इति चन्द्रवर्मा पृष्टवान्।

सर्वे 'वयं न जानीमः' इति शिरश्चालनेन सूचितवन्तः।

'एतादृशं समृद्धं नगरम् एतैः कथं न ज्ञातम्?' इति यावत् चन्द्रवर्मा चिन्तयन् आसीत् तावता दूरे स्थित्वा नगरं परिशीलयन् एकः सेवकः सन्तोषेण- "अहो! एतत् शिवपुरम्! निश्चयेन शिवपुरम् एव" इति उच्चैः उक्तवान्।

"एतत् शिवपुरम् इति भवान् निश्चयेन जानाति वा?" इति पृष्टवान् चन्द्रवर्मा।

"अथ किम्! अहं पूर्वम् एकमासं यावत् शिवपुरे आसम्। रुद्रपुरस्य पश्चिमदिशि एतत् राज्यम् अस्ति। एतदनन्तरं केवलं मरुभूमिः। एतस्य नगरस्य शासकप्रतिनिधिं धीरमल्लम् अहं सम्यक् जानामि। तत्र दृश्यमानस्य भवनस्य शिखरं दृष्ट्वा अहम् एतस्य नगरस्य परिचयं प्राप्तवान्। पूर्वं तु केनापि अन्येन मार्गेण एतं नगरं प्राप्तवान् आसम्। अतः एव प्रथमदर्शनेन परिचयं न प्राप्तवान्" इति उक्तवान् सः सैनिकः।

"एवं तर्हि रुद्रपुरतः शिवपुरम् आगन्तुम् अन्यः एव मार्गः अस्ति। तं जानन् अपि भवान् न निवेदितवान्" इति असमाधानेन उक्तवान् चन्द्रवर्मा।




सः सैनिकः कम्पमानेन स्वरेण उक्तवान्- "श्रीमन्! शिवपुरं गन्तुम् अन्यः मार्गः अस्ति इति तु सत्यम् एव। सः मार्गः मया दृष्टः आसीत् अपि। किन्तु आगमनसमये वयं कुत्र मार्गभ्रष्टाः जाताः इति अहं न ज्ञातवान्" इति।

अत्रान्तरे तैः पर्वतस्य मूलतः उत्पद्यमानः भेरीनादः श्रुतः। क्षणद्वयानन्तरं पूर्वध्वनेः प्रत्युत्तररूपेण इव नगरस्य सीमाभागतः अपि घोरः भेरीनादः उत्पन्नः। अनन्तरक्षणे नगरस्य सर्वभागेषु अपि युगपत् एव भेरीनादः

उत्पन्नः।

चन्द्रवर्मा 'नगरे किं प्रवर्तते' इति सूक्ष्मतया परिशीलितवान्। रक्षकाः भटाः आयुधादिभिः सिद्धाः सन्तः दुर्गभित्तेः उपरि युद्धसन्नद्धाः सन्ति इति सः ज्ञातवान्।

'अस्मान् शत्रून् मन्यमानाः एते भेरीनादद्वारा सङ्केतविनिमयं कृत्वा इदानीम् आक्रमणार्थं सिद्धाः सन्ति' इति आलोचितवान् चन्द्रवर्मा।

शत्रूणाम् आक्रमणं यावत् न आरभ्यते ततः पूर्वम् एव 'वयं शत्रवः न, अपि तु स्नेहिताः' इति अंशः ज्ञापनीयः। अन्यथा परिस्थितिः गम्भीरा भवेत् इति चिन्तयित्वा चन्द्रवर्मा श्वेतवस्त्रं खड्गसाहाय्येन उन्नीय इतस्ततः चालयन् मैत्रीं सूचितवान्।

नगरे सैनिकाः क्षणकालं यावत् पर्वतशिखरं परीक्षितवन्तः। अत्रान्तरे दृढकायः कश्चन दुर्गभित्तिम् आरुह्य इतरसैनिकान् मार्गतः अपसारयन् अग्रे आगत्य चन्द्रवर्मणः दिशि एकं बाणं प्रयुक्तवान्। चन्द्रवर्मा उत्प्लुत्य पार्श्वे गत्वा बाणमार्गात् दूरं गतवान्। बाणः सशब्दं भूमौ संलग्नः अभवत्। बाणे एकं पत्रं बद्धम् आसीत्।

चन्द्रवर्मा त्वरया पत्रम् उद्घाट्य पठितवान्। पत्रे शिवपुरस्य रक्षकप्रमुखेन सूचितम् आसीत् यत् भवन्तः के? कुतः आगताः? किमर्थम् आगताः? इत्यादिविषयाः सुस्पष्टं सूचनीयाः इति। 'समाधानकरम् उत्तरं अविलम्बेन न प्राप्तं चेत् भवन्तः शत्रवः



इति विचिन्त्य वयं भवत: नाशयाम:' इत्यपि पत्रे सूचितम् आसीत् ।

चन्द्रवर्मा सन्तोषेण रुद्रपुरमहाराजेन शिवसिंहेन दत्तम् आज्ञापत्रं बाणे संयोज्य रक्षकप्रमुखम् उद्दिश्य तं बाणं प्रेषितवान् ।

क्षणद्वयाभ्यन्तरे दुर्गे सन्तोषस्य वातावरणम् उत्पन्नम् । चन्द्रवर्माणं तत्सहचरान् च स्वागतीकर्तुम् उत्सुका: जना: सैनिका: च उच्चै: जयकारम् आरब्धवन्त: । उद्वेगक्षण: सन्तोषक्षणरूपेण परिवृत्त: अभवत् ।

पर्वतस्य अवरोहणार्थं कश्चन सामान्य: सोपानमार्ग: आसीत् । चन्द्रवर्मा तेन मार्गेण सहचरै: सह दुर्गस्य पार्श्वे परिखासीमां प्राप्तवान् ।

तदा तत्र केचन सैनिका: उत्साहेन आगतवन्त: । तान् दृष्ट्वा चन्द्रवर्मा आश्चर्यचकित:, अतीव सन्तुष्ट: च । यत: तेषां नायकत्वेन स्थित: अग्रे य: आगच्छन् अस्ति स: न अन्य:, अपि तु सुबाहु: एव ! अहो ! सुबाहु: इतोऽपि सुस्थ: !!

सुबाहु: अपि युवराजस्य चन्द्रवर्मण: परिचयं प्राप्तवान् । अनन्तरक्षणे एव पूर्वपरिचयं वचनै: व्यवहारेण वा न प्रकटयतु इति सङ्केतेन सूचितवान् । 'आवयो: पूर्वपरिचय: अस्ति इति इतरै: ज्ञातं चेत् प्राय: सुबाहो: कश्चन क्लेश: भवेत्' इति ज्ञातवान् चन्द्रवर्मा । अत: स: गाम्भीर्येण अग्रे गत्वा- ''भवान् खलु शिवपुरस्य सेनानायक: ? महान् सन्तोष: ।





अहं त्वरया राजप्रतिनिधिं धीरमल्लं द्रष्टुम् इच्छामि। तेन सह एकान्ते वार्तालापं कर्तुम् इच्छामि च'' इति उक्तवान्।

''यथाज्ञापयति देवः। प्रथमं भवन्तः विश्रान्तिसुखम् अनुभवन्तु। स्नानभोजनादिना मार्गायासं परिहरन्तु। अनन्तरं राजप्रतिनिधेः दर्शनं प्राप्तुं शक्नुवन्ति'' इति उक्त्वा सुबाहुः चन्द्रवर्मणा सह स्थितानां सैनिकानां वसत्यादि व्यवस्थार्थं स्वकीयान् सैनिकान् आज्ञापितवान्। 'अतिथिगृहं नीत्वा सम्यक् सत्कुर्वन्तु' इति सूचितवान् च।

चन्द्रवर्मणः अनुचरैः सह यदा सर्वे सैनिकाः निर्गताः तदा सुबाहुः विनयेन भक्त्या च चन्द्रवर्माणं नमस्कृत्य- ''महाराज ! अदृष्टशाली अहम्। अस्मिन् जन्मनि भवतः दर्शनं पुनः प्राप्यते इति मया न निरीक्षितम् आसीत्। वक्तव्यं प्रष्टव्यं च बहु अस्ति। तदर्थम्- एतत् न उचितं स्थलं, न वा एषः उचितः समयः। अतः गृहं गत्वा सावधानतया सविस्तरं वार्तालापं कुर्वः'' इति उक्त्वा तम् आत्मना सह नीतवान्।

सुबाहोः गृहे चन्द्रवर्मा स्नानादिकं कृतवान्। अनन्तरं तौ वार्तालापार्थम् उपविष्टवन्तौ ! पूर्वं सर्पकेतोः सैनिकतः आत्मानं रक्षन्तौ चन्द्रवर्मा सुबाहुः च नद्याम् उत्पतितवन्तौ किल ? अनन्तरं सुबाहोः का गतिः ? इति चन्द्रवर्मा न जानाति स्म।

सुबाहुः कथञ्चित् नदीतीरं प्राप्य कानिचन दिनानि यावत् अरण्ये अटन् आसीत्। तत्रैव सः धीरमल्लेन मिलितवान्। सर्पकेतुना सह युद्धे पराजितः सन् धीरमल्लः अपि अरण्ये सञ्चरन् आसीत्।

एवम् अकस्मात् मिलितौ एतौ तत्र तत्र अटन्तौ महाराजस्य शिवसिंहस्य आस्थानं प्राप्तवन्तौ। पुनश्च शिवसिंहेन शिवपुरं प्रति प्रेषितौ च।

शिवसिंहस्य आस्थाने सुबाहुः आत्मनः परिचयं वीरमल्लः इति उक्तवान्। 'केनापि कारणेन दुष्टः सर्पकेतुः मम परिचयं न प्राप्नोतु' इति तस्य आशयः आसीत्।

अद्यावधि तच्च रहस्यं तेन पालितम् आसीत् अपि।

चन्द्रवर्मा अपि नदीपतनानन्तरं स्वजीवने घटिताः घटनाः आद्यन्तं निवेदितवान्। एवं परस्परकथनसमाप्तेः अनन्तरं चन्द्रवर्मा अत्र आगमनस्य उद्देशं सविस्तरं निवेदयन् कांस्य-दुर्गस्य प्रस्तावं कृतवान्। तत् श्रुत्वा सुबाहुः आश्चर्यचकितः।

"महाराज! अस्माकं कष्टकालः अतीतः। सुदिनानि आसन्नानि इति भाति। वस्तुतः सेनानी धीरमल्लः इदानीं नगरे नास्ति। एषा वस्तुस्थितिः अस्माभिः गोप्यतया स्थापिता। सर्पकेतुः सेनया सह कांस्यदुर्गं प्रति गच्छन् अस्ति इति वार्ता अस्माभिः श्रुता। तस्य सेनासामर्थ्यं परिशील्य शक्यं चेत् तं मार्गे एव नाशयितुं धीरमल्लः गतवान्। दिनद्वयतः पूर्वं तेन रहस्ययात्रा आरब्धा। अत्रत्यः कोऽपि एतं विषयं न जानाति" इति उक्तवान् सुबाहुः।

घातुकस्य सर्पकेतोः नामश्रवणेन चन्द्र-वर्मणः मनः कोपेन उद्रिक्तम् अभवत्। तदा सुबाहुः पुनरपि उक्तवान्- "महाराज! सः सर्पकेतुः इदानीं न केवलं वीरपुरस्य राजा, अपि तु माहिष्मतीराज्यस्य चक्रवर्ती अपि! यशोवर्धनस्य मरणानन्तरं तपोवर्धनः वैराग्येण अरण्यं गतवान्। गुणवर्धनः च राजा जातः।



सर्पकेतुः साहाय्यव्याजेन माहिष्मतीं प्रविश्य गुणवर्धनम् एव मारितवान्। स्वयं सिंहासनम् आरुह्य चक्रवर्ती सञ्जातः अपि। सर्वाधिकारिणः तस्य दुराचारस्य इदानीं सीमा एव नास्ति" इति।

"एतावता राज्यलाभेन अपि न सन्तुष्टः वा सः? प्रायः धनदाहः न समाप्तः। अतः कांस्यदुर्गं प्रति सम्पत्तेः आशया प्रस्थितः। पश्यामः तावत्" इति क्रोधेन उक्तवान् चन्द्रवर्मा।

"सर्पकेतोः दण्डयात्रायाः कारणं न केवलं धनदाहः, अपि तु राज्यदाहः अपि। भाग्य-वशात् सः शिवपुरस्य उपरि आक्रमणं न कृत-वान् इत्येव अस्माकं पुण्यम्! वराकस्य तस्य

प्रयाणमार्गं वयं प्रतिक्षणं गुप्तचराणां द्वारा परिशीलयन्तः स्मः। यावत् सः एतस्मात् प्रदेशात् न निवर्तते तावत् अस्माकं निद्रा नास्ति। वस्तुतः एतस्मात् लोकात् तस्य निवारणेन एव अस्माकं तृप्तिः" इति उक्तवान् सुबाहुः।

"सुबाहो ! अधिकं चिन्तां न करोतु। दैवम् अस्माकम् अनुकूलकरम् अस्ति। यावत् दैवम् अनुकूलकरं तावत् किमर्थं चिन्ता ?" इति समाधानम् उक्तवान् चन्द्रवर्मा।

एवं प्रचलतः तयोः वार्तालापस्य मध्ये प्रविश्य कश्चित् गुप्तचरः एकं पत्रम् आनीय दत्तवान्।

सुबाहुः तत् पत्रं पठित्वा दुःखेन भीत्या च चन्द्रवर्मणः हस्ते दत्तवान्।

सेनानायकेन धीरमल्लेन लिखितं पत्रं तत्। चन्द्रवर्मा तत् आद्यन्तं पठितवान्। तत्र लिखितम् आसीत् यत् धीरमल्लः शिवपुरस्य उत्तरदिशि मरुभूमौ सर्पकेतुं महासैन्यसमेतं दृष्टवान् अस्ति। 'अल्पया सेनया एतं सम्मुखीकर्तुं न शक्यते' इति चिन्तयित्वा धीरमल्लः प्रतिनिवृत्तः। किन्तु एतत् सर्पकेतुना कथमपि ज्ञातम् एव। सः सेनां स्वीकृत्य धीरमल्लम् अनुसृतवान्। धीरमल्लः सेनया सह शिवपुरम् आगच्छन् अस्ति। अतः इदानीं नगररक्षणार्थं यावत् आवश्यकं तावत् सैन्यं दुर्गे स्थापयित्वा अवशिष्टेन समग्रसैन्येन सह साहाय्यार्थम् आगन्तव्यम् इति।

"महाराज ! अविचिन्तिततया एषा आपत् आगता। यावत् धीरमल्लः दुर्गस्य आश्रयं न प्राप्नोति ततः पूर्वं सर्पकेतुः आक्रमणं कुर्यात् एव। दुर्दैववशात् एवं प्रवृत्तं चेत् धीरमल्लस्य पराजयः निश्चितः। अनन्तरदिनेषु शिवपुरस्य नाशः अपि निश्चितः एव। अतः इदानीं समग्रसेनया सह धीरमल्लस्य रक्षणार्थं गमनम् एव उचितः उपायः। अन्या गतिः नास्ति। मार्गान्तरं चिन्तयितुम् अवकाशः अपि नास्ति" इति उक्तवान् सुबाहुः।

(अनुवर्तते)






# नागकन्या

'एषः राजा निश्चयेन एकस्मिन् दिने मम प्रश्नस्य उत्तरं दातुम् असमर्थः भविष्यति। तदा तस्य शिरः सहस्रधा छिन्नं भविष्यति' इति शवान्तर्गतः वेतालः चिन्तयन् महाराजं निरीक्षमाणः एव आसीत्। तदा पुनः आगतः त्रिविक्रमः वृक्षतः शवम् अवतार्य, स्वीयभुजे संस्थाप्य श्मशानं प्रति मौनं प्रस्थितवान्। तदा वेतालः- ''अये महाराज! पुनः पुनः महता श्रमेण भवता कृतस्य प्रयत्नस्य किं वा प्रयोजनं भवेत् इति अहं न जानामि। किन्तु एतावत् सम्यक् स्मरतु। लोके सरलाः मुग्धाः च अनेके जनाः अवकाशानां सदुपयोगं न प्राप्नुवन्ति। एतस्य विषयस्य उदाहरणभूतः धीरचन्द्रः। भवान् अपि धीरचन्द्रसदृशः स्यात् इति मम संशयः। तस्य कथां वदामि। कथाश्रवणेन मार्गायासः न्यूनः भवेत्'' इति उक्त्वा कथाम् आरब्धवान्।

## वेतालकथा



एकदा कौमुदीनामिका काचित् नागकन्या इदंप्रथमतया पातालतः भूमेः उपरि आगत्य, मानवरूपं धृत्वा नदीतीरे विहरति स्म। भूलोकस्य वातावरणम् अतीव आह्लाददायकम् आसीत्। सा नदीं परितः विद्यमानं प्रकृति-सौन्दर्यम् आनन्देन पश्यति स्म।

'अहो! अत्रत्याः मानवाः निश्चयेन महाभाग्यशालिनः' इति यदा सा मनसि चिन्तितवती तदा एव तत्र एकः युवकः आगच्छन् दृष्टः।

तस्य युवकस्य नाम धीरचन्द्रः। सः धनिकगृहे जन्म प्राप्य, बाल्यं सवैभवं यापयित्वा, इदानीं दरिद्रावस्थां प्राप्तवान्। इदानीं तस्य स्वास्थ्यम् अपि समीचीनं न अस्ति। औषधार्थं धनं नास्ति। गृहीतम् ऋणम् अद्यावधि न प्रत्यर्पितं च। वृद्धिः वर्धमाना अस्ति। एतस्मिन् वर्षे अपि वर्षाभावात् दुरवस्था द्विगुणिता अस्ति। पुनः गत्यन्तराभावात् ऋणं गृहीतम्। उत्तमर्णानां निन्दावचनानि असहमानः तस्य पिता षण्मासेभ्यः पूर्वं अनुक्त्वा एव गृहं परित्यज्य गतवान्। कुत्र गतवान्, इदानीं कुत्र अस्ति, किं करोति इति किमपि न ज्ञातम्।

किङ्कर्तव्यतामूढः धीरचन्द्रः पितामहकालीनं गृहं गतसप्ताहे ऋणस्य प्रत्यर्पणार्थं विक्रीतवान्। किन्तु भाग्यहीनस्य तस्य गृहे तस्याम् एव रात्रौ चौर्यं जातम्। गृहविक्रयणेन लब्धं सर्वं धनं नष्टम्। तस्य गृहं यः क्रीतवान्, सः गृहं स्वायत्तीकर्तुम् इच्छन् सप्ताहात्मकम् अवधिं दत्तवान्। अद्य तस्य अवधेः अन्तिमं दिनम्।

गृहे माता अपि अस्वस्था अस्ति। उत्तमर्णानां हिंसा असहनीया अस्ति। एतयोः मध्ये वासार्थं गृहम् अपि नास्ति! श्वः आरभ्य किं वा करणीयम् इति चिन्तयन् धीरचन्द्रः नदीतीरम् आगत्य तूष्णीम् एकत्र उपविष्टवान्। नागकन्या कौमुदी धीरचन्द्रस्य मुखमात्रं न लक्षितवती। तस्य सौन्दर्यं दृष्ट्वा विस्मयम् अनुभवन्ती, सन्तोषेण कुतूहलेन च "अहो! मानवानां सौन्दर्यं कियत् मनोहरम् अस्ति!" इति चिन्तितवती।



कौमुदी तम् एव पश्यन्ती बहुकालं यावत् तूष्णीं स्थितवती। चिन्तामग्नः धीरचन्द्रः अपि तां न लक्षितवान्। अन्ते सा एव तस्य समीपम् आगत्य "कः भवान्?" इति पृष्टवती। तदा धीरचन्द्रः प्रकम्पितः भूत्वा, अपूर्वलावण्यं निर्निमेषं पश्यन् "भवती का?" इति पृष्टवान्।

"मम नाम कौमुदी। अहं न मानवस्त्रीः, किन्तु नागकन्या" इति उक्त्वा धीरचन्द्रस्य मुखं परीक्षादृष्टया दृष्ट्वा "भवान् किमर्थं चिन्तामग्नः अस्ति?" इति पृष्टवती।

धीरचन्द्रः स्वीयकष्टानि निवेदितवान्। तानि श्रुत्वा नागकन्या "अहं भवद्विषये अनुरक्ता अस्मि। भवन्तं सन्तुष्टं करिष्यामि। अनन्तरं भवान् मया सह नागलोकं आगमिष्यति वा?" इति पृष्टवती।

नागकन्यायाः वचनं श्रुत्वा धीरचन्द्रः आश्चर्यचकितः भूत्वा "मम सर्वाणि कष्टानि कथितवान् किल? अतः अहं कुत्रापि आगन्तुम् असमर्थः अस्मि" इति उक्तवान्।

"अस्तु तावत्। भवतः समस्या केवलं धनसम्बन्धिनी एव। अहं पर्याप्तं सुवर्णम् आनीय भवते दास्यामि। अत्रैव तिष्ठतु" इति उक्त्वा नागकन्या अदृश्या अभवत्।

एतावत्पर्यन्तं दृष्टं स्वप्नः वा सत्यं वा इति धीरचन्द्रः न ज्ञातवान्। किञ्चित्कालानन्तरं नागकन्या प्रत्यक्षीभूय एकं ग्रन्थिं तस्य पुरतः स्थापितवती। तस्मिन् सुवर्णमुद्रिकाः अमूल्यानि मणिमाणिक्यादीनि च आसन्।

"एतेन धनेन भवतः ऋणादीनां प्रत्यर्पणं करोतु। इतोऽपि अन्यत् यत् किमपि दारिद्र्यम् अस्ति चेत्, तेन अपि मुक्तः भूत्वा आगामिनि दशमीदिने अत्र आगच्छतु। न आगमिष्यति चेत् भवतः कुटुम्बं समूलं नाशयिष्यामि" इति उक्तवती नागकन्या।

तद्दिनादारभ्य धीरचन्द्रस्य भाग्यं परिवृत्तम्। नागकन्यया दत्तं एकं रत्नं विक्रीय लक्षदीनारान् सः प्राप्तवान्। तेन धनेन प्रथमं सः सम्पूर्णरूपेण ऋणमुक्तः अभवत्। किञ्च अवशिष्टेन धनेन एकं सुन्दरं भवनं क्रीतवान्। गृहे



दासानुदासीजनाः नियुक्ताः। उत्तमवैद्यद्वारा मातुः चिकित्सां कारितवान्। सा शीघ्रम् एव स्वस्था जाता। सा स्वीयं नूतनगृहं, तत्र सेवातत्परान् दासदासीजनान् च दृष्ट्वा आश्चर्यम् अनुभवन्ती धीरचन्द्रं "भोः पुत्र, अकस्मात् अस्माकं भाग्यपरिवर्तनं कथं जातम्?" इति पृष्टवती।

धीरचन्द्रः किमपि अगोपयन् सर्वं वृत्तान्तं जननीं कथितवान्। तत्सर्वं श्रुत्वा सा भीता। "तादृश्याः नागकन्यायाः सम्बन्धः अपायकरः भोः! भवान् येन केनापि उपायेन नागकन्या-सम्बन्धतः मुक्तः भवतु। अस्मिन् विषये मम अनुजः शूरगुप्तः भवतः साहाय्यं करिष्यति। भवान् तं पृच्छतु" इति सूचितवती च। शूरगुप्तः स्वार्थपरः। तस्य विवाहयोग्या एका पुत्री अस्ति। इदानीं धीरचन्द्रस्य ऐश्वर्यादिकं दृष्ट्वा, स्वीयां पुत्रीं एतस्मै दत्त्वा विवाहं कर्तुम् अवश्यम् इच्छति। प्रकृतसन्दर्भे तादृशाः स्वार्थपराः यथा साहाय्यं कुर्वन्ति, तथा अन्यः न कोऽपि करोति।

धीरचन्द्रः मातुः वचनम् अनुसृत्य शूर-गुप्तस्य समीपं गतवान्। तस्य माता यथा चिन्तितवती, तथा एव तत्र अभवत्। धीर-चन्द्रः इदानीं धनवान् जातः इति ज्ञात्वा शूरगुप्तः आदरपूर्वकं तस्य सत्कारं कृतवान्। तस्य सर्वं वृत्तान्तं श्रुत्वा "नागकन्यातः विमो-चनं प्राप्तुम् अहम् एकम् उपायं सूचयामि। भवतः मातुः रोगस्य निवारणार्थं पाताललोके विद्यमानं नागमूलम् आनयतु इति तां वदतु। तत् मूलम् आनेतुं कौमुदी असमर्था भवति" इति उपायं सूचितवान्।

दशमीदिने धीरचन्द्रः नागकन्यां द्रष्टुं नदीतीरं गतवान्। तत्र कौमुदी तमेव निरीक्षमाणा आसीत्। धीरचन्द्रः शूरगुप्तेन सूचितं वचनं कौमुदीम् उक्तवान्।

तस्य वचनसमनन्तरमेव कौमुदी– "मम आयुः सहस्रवर्षपरिमितम् अस्ति। यदि अहं नागमूलम् आनयामि, तर्हि मम आयुषः अर्धं नश्यति। नश्यतु नाम, चिन्ता नास्ति। अहं नागमूलम् आनीय दास्यामि। तेन मानवानां



रोगाणां निवारणं भवति'' इति उक्तवती ।

तथा उक्त्वा, तथैव गत्वा सा नागमूलम् आनीय धीरचन्द्राय दत्तवती। ''एतद्द्वारा मातुः रोगनिवारणं कृत्वा आगामिनि पूर्णिमादिने नागलोकं गन्तुं सिद्धः भूत्वा आगच्छतु'' इति उक्त्वा गतवती च ।

नागमूलद्वारा धीरचन्द्रस्य मातुः रोगः निर्मूलः अभवत्। किन्तु तेन सा सन्तोषं नैव प्राप्तवती। चिन्ताव्याकुला सा पुनः शूरगुप्तम् आनायितवती ।

शूरगुप्तः आगत्य, जातं सर्वं वृत्तान्तं ज्ञात्वा धीरचन्द्रं – ''भवतः माता अत्र एकाकिनी अस्ति। असहायां तां त्यक्त्वा भवान् कौमुद्या सह कथं गन्तुं शक्नोति ? पिता कुत्र गतवान् इति न जानाति। अतः यावत् पिता न आगमिष्यति, तावत् आगन्तुं न शक्नोमि इति तां वदतु'' इति उपायं सूचितवान् ।

पूर्णिमादिने धीरचन्द्रः नागकन्यां दृष्ट्वा, शूरगुप्तेन सूचितं विचारं कथितवान्। तस्य वचनं श्रुत्वा नागकन्या किञ्चित् चिन्तिता भूत्वा ''भवतः जनकस्य अन्वेषणं कृत्वा आनेतुं मम आयुषः शतवर्षाणि त्याज्यानि भवन्ति। तथापि भवदर्थम् एतत् करिष्यामि। आगामिनि पञ्चमीदिने नागलोकं गन्तुं सज्जीभूय तिष्ठतु'' इति सा धीरचन्द्रम् उक्तवती ।

तस्याम् एवं रात्रौ धीरचन्द्रस्य पिता गृहं प्रत्यागतवान्। पत्युः प्रत्यागमनेन सन्तोषापेक्षया पुत्रः गृहं परित्यज्य दूरं गमिष्यति इति तस्य मातुः दुःखम् एव अधिकतरम् अभवत्। तदा शूरगुप्तः पुनः अन्यम् उपायं सूचितवान्। सः उपायः एवम् आसीत् यत् धीरचन्द्रस्य नागलोकगमनम् असाध्यम्। मानवाः एकपत्नीव्रतिनः। तेषां सम्प्रदायानुसारेण विवाहानन्तरं पत्नी एव मातृगृहं परित्यज्य श्वशुरगृहे वासं करोति। नागकन्या कौमुदी धीरचन्द्रे अनुरक्ता अस्ति चेत्, विवाहानन्तरं तया भूलोके श्वशुरगृहे एव वासः करणीयः ।

शूरगुप्तः एतान् नियमान् सूचयित्वा, पुनः धीरचन्द्रम् उद्दिश्य ''नागकन्या मानवानां मध्ये वासं कर्तुं न शक्नोति। अतः सा एतान्



नियमान् न अङ्गीकरोति। यदि यथाकथञ्चित् सा एतान् नियमान् अपि अङ्गीकरोति तर्हि एतस्य अन्तिमास्त्रस्य प्रयोगं करोतु" इति अन्तिमम् उपायम् अपि सूचितवान् ।

पञ्चमीदिने धीरचन्द्रः नागकन्यां दृष्ट्वा, भूलोके मानवानां नियमान् कथितवान्।

"भवन्तं परिणीय यदि अहं भवतः गृहम् आगमिष्यामि, तर्हि नागलोकात् मम सम्बन्धः सर्वथा विच्छिन्नः भविष्यति। अतः भवन्तं केवलं अल्पकालकृते नागलोकं नेतुम् इच्छामि" इति चिन्ताव्याप्रा नागकन्या उक्तवती। तस्याः वचनं श्रुत्वा धीरचन्द्रः-"एतत् तु अस्माकं मानवानां सम्प्रदायस्य विरुद्धं भवति। अतः कृपया मां क्षाम्यतु" इति उक्तवान्।

"अहम् इच्छामि चेत्, भवन्तं बलात् अपहृत्य नेतुं शक्नोमि। अस्तु, भवतः कृते मम सर्वाः शक्तीः महत्त्वं च त्यक्तुं सिद्धा अस्मि। भवान् यथा वदति, तथैव अस्तु" इति उक्तवती नागकन्या।

तस्याः अङ्गीकारं श्रुत्वा धीरचन्द्रः मति-भ्रान्तः इव भूत्वा, अन्तिमम् उपायं स्मृत्वा "यदि भवती अपूर्वशक्तिभिः हीना भवति, तदा मत्तः पीडा भवेत् इति भवत्याः भयं नास्ति वा?" इति पृष्टवान्।

"अहं तु भवतः विषये पूर्णरूपेण अनु-रक्ता अस्मि। एवं हि सति भवान् मां किमर्थं पीडयेत्?" इति पृष्टवती कौमुदी।

"तस्य कारणम् अस्ति। मम पिता गरुड-वंशीयः। मम मातुः कृते सः स्वीयं लोकं परित्यज्य भूलोकम् आगत्य अत्रैव स्थितवान्। वंशगुणः मयि अपि भवेत् खलु?" इति उक्तवान् धीरचन्द्रः।

तस्य वचनं श्रुत्वा कौमुदी-"गरुडानां नागानां च मध्ये जातिवैरः अस्ति इति तु सत्यम्। किन्तु मम अनुरागः प्राणापेक्षया अधिकतरः अस्ति। अतः अहं भवतः पत्नी भवितुम् इच्छामि। एतदर्थं मम प्राणान् अपि तृणाय मन्ये" इति उक्तवती।

धीरचन्द्रः तस्याः उत्तरं श्रुत्वा पुलकितः भूत्वा "अहं भवत्या सह नागलोकम् आगमि-

ष्यामि'' इति उक्तवान्।

वेतालः अत्र कथां समाप्य ''भोः राजन्, धीरचन्द्रः स्वार्थसिद्ध्यर्थम् अनेकनियमान् उपस्थापितवान्। नागकन्या कौमुदी तान् सर्वान् नियमान् अपि परिपूरितवती। एवं हि सति तां गृहं नेतुं परिणेतुं च धीरचन्द्रः शक्तः। तदेव उचितम् अपि। तथा अकृत्वा नागकन्यया सह नागलोकं गन्तुं सः सिद्धः अभवत्। सम्पूर्णरूपेण कार्यसिद्धेः अनन्तरम् अपि सः मूर्खवत् किमर्थम् आचरितवान्? एतत् तु तस्य मौढ्यं किल? एतस्य समाधानं जानन् अपि न वदति चेत् भवतः शिरः सहस्रधा छिन्नं भविष्यति'' इति उक्तवान्।

तदा त्रिविक्रमः एवम् उक्तवान्- ''धीरचन्द्रेण ये नियमाः उक्ताः, ते सर्वे स्वार्थपरेण तस्य मातुलेन शूरगुप्तेन बोधिताः। यदा नागकन्या तान् सर्वान् अङ्गीकृतवती, तदा धीरचन्द्रः लोकस्वभावं सम्यक् ज्ञातवान्। जननीजनकयोः मातुलस्य च धनम् एव प्रधानम्। धनाभावात् तस्य पिता पत्नीं त्यक्त्वा पलायनं कृतवान्। तस्य मातुलः हितचिन्तकः इव आगतवान्। नागकन्या तेभ्यः न केवलं धनं दत्तवती, अपि तु स्वीयम् आयुः अपि समर्पितवती। तथापि तेषां कृतज्ञताभावः नास्ति। प्रत्युत स्वार्थपराः ते तां वञ्चयितुं प्रयतितवन्तः। धीरचन्द्रं परिणीय भूलोके वसति चेत् अनेकानि कष्टानि आपतन्ति इति श्रुत्वा अपि नागकन्या कौमुदी तानि सर्वाणि सोढुं सिद्धा भूत्वा धीरचन्द्रं परिणेतुम् अङ्गीकृतवती। एतत् दृष्ट्वा धीरचन्द्रः नागकन्यायाः दृढानुरागस्य परिचयं प्राप्तवान्। स्वीयबन्धुजनाः कीदृशाः अधमाः इति अपि सः ज्ञातवान्। एतैः कारणैः एव सः सर्वान् परित्यज्य तया सह गन्तुं सिद्धः अभवत्। अत्र तस्य नीतिराहित्यं किमपि नास्ति'' इति।

एवंरीत्या यदा महाराजस्य मौनभङ्गः जातः तदा शवसहितः वेतालः अदृश्यः भूत्वा, वृक्षं गत्वा पूर्ववत् तस्य शाखाम् अवलम्बितवान्।



# रोगनिर्णयः

कृपानन्दः कश्चन वैद्यः। सः रोगिणः नाडीहृदयादीन् परीक्ष्य अन्ते पृच्छति- 'भोः! गतेभ्यः चतुर्भ्यः दिनेभ्यः भवान् किं किं खादितवान् इति वदतु। एकम् अपि न विस्मर्तव्यम्। यतः तदाधारेण एव अहं रोगकारणं ज्ञातुं शक्नोमि" इति।

अनन्तरं रोगी यद्यत् वदति तत्सर्वं श्रुत्वा- "एवं वा? इदानीं रोगस्य कारणं ज्ञातम्। एतत् औषधं स्वीकरोतु। रोगः शान्तः भविष्यति" इति उक्त्वा वैद्यः औषधं दत्वा धनं स्वीकरोति।

रत्नाकरः कृपानन्दस्य शिष्यः। सः गुरोः चिकित्सापद्धतिं बहुकालं यावत् परीक्ष्य, एकदा गुरुं पृष्टवान्- "गुरुदेव! रोगिणं चतुर्भ्यः दिनेभ्यः स्वीकृतस्य आहारस्य विषयं सर्वदा पृच्छति। रोगनिर्णये एतत् किं तावत् प्राधान्यम् अर्हति?" इति।

तदा कृपानन्दः हसन्- "आहारव्यवस्थां श्रुत्वा तेषाम् आर्थिकपरिस्थितिं ज्ञातुं शक्नोमि। तदनुगुणं तैः दातव्यस्य शुल्कस्य निर्णयं करोमि। एतावदेव एतस्य रहस्यम्" इति उक्तवान्।






अस्माकं देवालयाः–

# कालीघट्टः

बहोः कालात् पूर्वम् आत्मारामः नाम ब्राह्मणः अरण्यसमीपस्थे गङ्गातीरे तपः आचरति स्म। अरण्यपार्श्वे स्थिते ग्रामे तस्य वसतिः।

एकदा सायङ्काले आत्मारामः स्वध्यानानन्तरम् उत्तिष्ठन् गङ्गाप्रवाहे उद्गच्छन्तीं प्रभारेखां दृष्टवान्। तेन सः आश्चर्यचकितः। परितः अन्धकारः व्याप्तः आसीत् इत्यतः सः तत्स्थलस्य समीपं गन्तुं न शक्तवान्।





तस्यां रात्रौ आत्मारामस्य निद्रा नास्ति। सायङ्काले दृष्टायाः प्रभारेखायाः एव चिन्तनम्। अनन्तरदिने उषःकाले एव सः गङ्गातीरं गतवान्। ह्यस्तनप्रकाशः तत्रैव आसीत्। एषः समीपं गत्वा दृष्टवान्। जले प्रकाशमानः एकः शिलाहस्तः तेन दृष्टः।




आत्मारामः तं स्वगृहम् आनीतवान् । रात्रौ तेन अपूर्वः स्वप्नः दृष्टः- यज्ञार्थम् आगतां सतीदेवीं दृष्ट्वा दक्षराजः कोपावेशेन शिवम् अवाच्यैः शब्दैः निन्दितवान् । तेन सतीदेवी मूर्च्छां गता अभवत् । यज्ञकुण्डस्य पार्श्वे पतिता च ।

मृतायाः सतीदेव्याः शवम् उन्नीय शिवः भूलोके अटितुम् आरब्धवान् । शिवस्य एतम् उन्मत्तव्यवहारं निरोद्धुं कोऽपि न समर्थः ।





अन्ते विष्णुः स्वसुदर्शनचक्रं प्रयुक्तवान् । विष्णुचक्रं सतीदेव्याः शरीरं छिन्न-विच्छिन्नम् अकरोत् । शरीरस्य एकैकम् अङ्गम् एकैकस्मिन् प्रान्ते पतितम् । एकः हस्तः अस्मिन् अरण्यप्रान्ते पतितः आसीत् ।

आत्मना प्राप्तः शिलाहस्तः सतीदेव्याः इति आत्मारामः ज्ञातवान् । सः तं हस्तं कालीमातुः विग्रहं प्रतिष्ठापितवान् । अरण्ये एव कुटीरं निर्माय तस्याः पूजाम् आरब्धवान् ।






देव्याः कुटीरम् अरण्ये अस्ति इति कारणतः बहुकालपर्यन्तम् एषा वार्ता केनापि न ज्ञाता । एकदा कश्चित् भूस्वामी गङ्गानद्यां नौकया प्रयाणं कुर्वन् अरण्ये उत्पन्नं शङ्खनादं श्रुतवान् ।

भूस्वामी नौकातः अवतीर्य अरण्यं प्रविष्टवान् । कालीदेव्याः पुरतः केचन मुनयः उपविष्टाः आसन् । आश्चर्यम् अनुभवन् सः देवीं साष्टाङ्गं नमस्कृतवान् ।






मुनीनाम् अनुमतिं प्राप्य सः भूस्वामी देव्यै मन्दिरं निर्मितवान् । क्रमशः भक्ताः तत्र आगन्तुम् आरब्धवन्तः । कालान्तरे तत्रत्यम् अरण्यम् अदृश्यम् अभवत् । अर्चकाः वणिजः च तस्मिन् प्रदेशे गृहाणि निर्मितवन्तः ।

आलयस्य निर्माणम् इतोऽपि विशालतया सम्पन्नम् । जनाः प्रवाहरूपेण आगच्छन्ति स्म । उत्सवाः रथयात्राः च आरब्धाः । अष्टादशे शतके तत् स्थलम् 'कालीघाट्' इति नाम्ना प्रसिद्धम् अभवत् ।





'कालीघाट्' इति नाम एव कालान्तरे 'कलकत्ता' इति रूपान्तरं प्राप्नोत् इति श्रूयते । ईस्ट् इण्डिया संस्थायाः आगमनेन एतस्य नगरस्य अभिवृद्धिः महता वेगेन सम्पन्ना । इदानीं नु बृहत्तमेषु अन्यतमम् अस्ति कलकत्ता-नगरम् ।



# विचित्रा पत्नी

बाग्दादनगरे निदीसुमान् नाम वणिक् आसीत्। सः कदाचित् अपारसौन्दर्यवर्ती काश्चित् युवतिं दृष्टवान्। तस्याः सौन्दर्येण आकृष्टः सः पूर्वापरं किमपि अनालोच्य तां परिणीतवान्।

एतद्विषये ज्येष्ठानां हितवचनं, बन्धुमित्राणां उपदेशं वा सः न परिगणितवान्।

विवाहानन्तरं सुमानः विशालं गृहं भाटकेन स्वीकृत्य तत्र वसतिम् आरब्धवान्। प्रथमं द्वित्राणि दिनानि सुखेन एव गतानि। अनन्तरं तस्याः विचित्रव्यवहारः सुमानस्य दृष्टौ आगतः। सा भोजनम् एव न करोति। आग्रहेण उपवेशिता चेदपि किमपि न स्वीकरोति। 'आहारं किमर्थं न स्वीकरोति' इत्यस्य कारणम् अपि न वदति। 'किमर्थं सा एवम् आचरति ? किं एतस्याः बुभुक्षा न भवति वा ?' इति चिन्तितवान् सुमानः।

एवम् एव दश दिनानि अतीतानि। पत्नी तेषु दिनेषु एकदा अपि भोजनं न कृतवती। तत्कारणतः बलहीनता निरुत्साहः वा तस्यां न दृष्टः। सा यथापूर्वम् उत्साहेन एव आसीत्। सौन्दर्ये वा क्रियाशीलतायां वा न काऽपि न्यूनता। 'अहं यथा न जानीयां तथा एषा रहसि भोजनं कुर्यात् वा ? तथा कुर्यात् इति अङ्गीकृतं चेत् अपि तस्य का आवश्यकता अत्र ? एतस्य संशयस्य परिहारं विना मम अपि सुखं नास्ति। अहं केवलं कथं वा प्रतिदिनम् उदरपूर्णं भोजनं कर्तुं शक्नुयाम् ?'

'एषा रात्रौ किं करोति इति परीक्षा करणीया एव' इति निश्चित्य सुमानः एकदा तां प्रतीक्षमाणः निद्राम् अभिनयन् शयनं कृतवान्।

मध्यरात्रे सा शयनात् उत्थाय मन्दं द्वारम् उद्घाट्य बहिः गतवती। एतत् दृष्ट्वा आश्चर्यचकितः सुमानः अपि विना शब्दं जागरूक-



तया तस्याः अनुसरणं कृतवान्। "एकाकिनी एषा कथम् एवं धैर्येण गच्छति ?"

अन्धकारे एव नगरात् बहिः स्थितं श्मशानं सा प्राप्तवती। श्मशानस्य पार्श्वे एका लघुभित्तिका आसीत्। तस्याः उपरि स्थितः पिशाचः एतां दृष्ट्वा हस्तप्रसारम् अकरोत्। एषा युवतिः सन्तोषेण तस्य हस्तं गृहीत्वा भित्तिम् आरूढवती, अपरपार्श्वे अवतीर्णा च। अनन्तरं सा युवतिः पिशाचः च अदृश्यतां गतौ।

एतत् दृश्यं दृष्ट्वा सुमानः दिग्भ्रान्तः। 'पिशाचेन सह गता स्वपत्नी भित्तेः अपरपार्श्वे किं किं खादितवती स्यात्। पिशाचेन सह कथं व्यवहृतवती स्यात्, इत्यादिकं मनसि कल्पयित्वा एव सः भीत्या रोमाञ्चनं प्राप्तवान्।

ततः धावन् आगत्य सुदीर्घश्वासोच्छ्वासेन आत्मानं निगृह्णन् सः यथापूर्वं निद्रितः इव शयनं कृतवान्। एकघण्टानन्तरं सा युवतिः गृहं प्रत्यागतवती। तस्याः प्रत्यागमनं ज्ञात्वा अपि सुमानः मौनं स्थितवान्। 'कोपं प्रदर्शयामि चेत् किमपि अनिष्टं सम्भवेत्' इति तस्य भीतिः।

अनन्तरदिने सुमानः भोजनसमये शान्तस्वरेण पत्नीं उक्तवान्- "भवती यादृशम् आहारम् इच्छति तादृशं दापयितुम् अहं समर्थः। मयि यथेष्टं धनम् अस्ति। एवं स्थिते किमर्थं वा भवत्या मध्यरात्रे अन्धकारे श्मशानं प्रति गन्तव्यम्? यदि भवती मां सूचयेत् तर्हि अहं भवदभिलषितं निश्चयेन आनीतवान् स्याम्" इति।

एतत् श्रुतवत्याः युवत्याः मुखं कोपेन आरक्तम् अभवत्। 'मम रहस्यं प्रकाशतां गतम्' इति ज्ञात्वा कोपाविष्टा सा चषके स्थितं जलं स्वीकृत्य मन्त्रं जपन्ती सुमानं परिषिक्तवती। अपरक्षणे सुमानः शुनकरूपं प्राप्तवान्।

आत्मानं रक्षितुम् इच्छन् शुनकरूपी सुमानः ततः वेगेन पलायितवान्। एतं मारायितुम् इच्छन्ती सा अपि बहुधा प्रयत्नं कृतवती। किन्तु एषः कथञ्चित् गृहात् बहिः



आगतवान्। किन्तु तथा आगमनसमये द्वारमध्ये पुच्छं सलग्नम् अभवत्। यदा वेगेन उत्पतितं तदा पुच्छं तत् मध्ये छिन्नम् अभवत् च।

छिन्नपुच्छं नूतनशुनकं मार्गे भीत्या पलायन्तं दृष्ट्वा इतरे शुनकाः अपि भषन्तः अनुसृतवन्तः। तेषां पीडातः आत्मानं रक्षितुं शुनकरूपी सुमानः कश्चित् आपणं प्रविष्टवान्। आपणिकः परमदयालुः। अतः सः मार्गशुनकान् भापयित्वा एतं शुनकं रक्षितवान्। एषः शुनकः कृतज्ञताभावेन पुच्छं चालयन् प्रीत्या आपणिकम् अपश्यत्। तद्दिनात् एतस्य शुनकस्य वसतिः तत्रैव। आपणिकः एतं शुनकं प्रीत्या पालितवान्।

एकदा वस्तूनि क्रेतुम् आगता काचित् स्त्री वस्तूनि क्रीत्वा धनं दत्तवती। तत्र एकं नाणकं व्यवहारबाह्यम् आसीत्। आपणिकः तत् नाणकं तस्यै प्रत्यर्पितवान्। सा तत् अस्वीकृत्य "किमर्थं प्रत्यर्पयति? " इति पृष्टवती।

"एतत नाणकं व्यवहारबाह्यम् इति मम शुनकः अपि जानाति, किमुत अहम्? अतः एव प्रत्यर्पितवान्" इति उक्तवान् आपणिकः।

"एवं वा? तर्हि शुनकमुखात् वाचयतु तावत" इति वदन्ती सा महिला स्वसमीपे स्थितानि सर्वाणि नाणकानि भूमौ पातितवती।

शुनकेन पादसाहाय्येन व्यवहारयोग्यानि नाणकानि पार्श्वे स्थापितानि। व्यवहारबाह्यं नाणकं केवलं न स्पृष्टम् अपि। आपणिकस्य सङ्केतादिकं विना अपि एषः शुनकः नाणकपरीक्षां निर्दुष्टं करोति किल?" इति आश्चर्यम् अनुभूतवती सा महिला।

'मम शुनकः नाणकपरीक्षायां निपुणः' इति आपणिकः सर्वत्र सगर्वं वक्तुम् आरब्धवान्। केचन उद्देशपूर्वकं व्यवहारबाह्यानि नाणकानि योजयित्वा शुनकस्य पुरतः स्थापयन्ति स्म। शुनकः तु क्षणमात्रेण व्यवहारबाह्यं नाणकं पृथक्करोति स्म।

एकदा काचित् वृद्धा आपणम् आगतवती। तदा आपणिकः वस्तूनां व्यवस्थापने व्यग्रः

आसीत्। सा वृद्धा शुनकं "मया सह आगच्छतु" इति सङ्केतेन आहूतवती। शुनकः तस्याः अनुसरणम् अकरोत्।

वृद्धा ततः गृहं गत्वा स्वपुत्रीम् उक्तवती- "पुत्रि ! व्यवहारबाह्यस्य नाणकस्य परीक्षायां समर्थं शुनकं भवती कुत्रापि दृष्टवती वा ? केनापि मान्त्रिकेण कापालिकया वा मानवः कश्चित् शुनकीकृतः इति अहं मन्ये। भवती एतं शुनकं परीक्षादृष्ट्या परिशीलयतु तावत्" इति।

विंशतिवर्षीया सा पुत्री गृहात् बहिः आगत्य शुनकं परीक्षादृष्ट्या सम्यक् परिशीलितवती। अनन्तरं चषके स्थितं जलम् अभिमन्त्र्य तेन अभिमन्त्रितेन जलेन शुनकं परिषिक्तवती।

तत्क्षणे शुनकः अदृश्यतां गतः। तत्स्थाने सुमानः प्रत्यक्षः अभवत्। सः आनन्दाश्रूणि स्रावयन् युवतिं नमस्कृत्य आत्मना कथं शुनकरूपं प्राप्तम् इति सविस्तरं निवेदितवान्।

सा युवतिः मान्त्रिकविद्याः सम्यक् जानाति। सामान्यजनानां हितार्थं सा तस्याः विद्यायाः उपयोगं करोति स्म। सा सुमानस्य हस्ते अभिमन्त्रितं जलं दत्त्वा, तस्य उपयोगक्रमं, 'अग्रे किं करणीयम्' इति च सूचितवती।

सुमानः ततः साक्षात् स्वगृहं गतवान्। तत्र तदा सा पत्नी न आसीत्। तां प्रतीक्षमाणः सुमानः तत्रैव स्थितवान्।

किञ्चित्कालानन्तरम् आगता सा पुरतः सुमानं दृष्ट्वा दिग्भ्रान्ता। पुनः अपि सुमानस्य उपरि मन्त्रप्रयोगं कर्तुम् इच्छन्ती सा जलम् आनेतुम् उद्युक्ता। किन्तु अत्रान्तरे सुमानः आत्मना आनीतं मन्त्रजलं तस्याः उपरि पातितवान्।

तत्क्षणे एव अपूर्वसुन्दरी सा अश्वशिशुरूपं प्राप्तवती। हेषारवं कुर्वती कुत्रापि देशान्तरं गतवती च।






पूर्वं यत्र यज्ञाश्वः अदृश्यः अभवत् तत्र सर्वे सगरकुमाराः गतवन्तः। तत्र एकस्मिन् स्थले अश्वस्य भूतलप्रवेशचिह्नं दृष्ट्वा, तत्र खनितुम् आरब्धवन्तः। तथा खनन्तः ते पातालपर्यन्तं गतवन्तः। तत्र तपोमग्नं कपिल-महामुनिं दृष्टवन्तः। तस्य समीपे एव अपेक्षितः यज्ञाश्वः स्थितः आसीत्।

'कपिलमुनिः एव अश्वस्य अपहारकः स्यात्' इति तर्कयन्तः सगरकुमाराः तं बद्धुं प्रयत्नं कृतवन्तः। एतेन कुपितः कपिलमुनिः नेत्रे उन्मील्य उग्रदृष्ट्या दृष्टवान्। तदा सर्वे सगरपुत्राः युगपत् एव भस्मीभूताः अभवन्।

एतं घोरवृत्तान्तं नारदद्वारा सगरः ज्ञातवान्। 'केनापि उपायेन यागाश्वः आनेतव्यः' इति निश्चित्य सः असमञ्जसपुत्रम् अंशुमन्तं पातालं प्रेषितवान्। अंशुमान् पाताललोकं प्रविश्य तत्र स्थितं कपिलमुनिं दृष्ट्वा भक्त्या नमस्कृत्य पार्श्वे मौनं स्थितवान्।

कपिलः तं दृष्ट्वा सन्तुष्टः सन् "वत्स! अश्वं गृहीत्वा पितामहसमीपं गच्छतु। एते सर्वे विवेकशून्याः। अतः भस्मीभूताः इति पितामहं वदतु" इति उक्तवान्।

"भोः महात्मन्, मृतानां एतेषां मदीयपितृवर्याणां स्वर्गप्राप्तेः उपायं कृपया उपदिशतु" इति अंशुमान् कपिलमुनिं प्रार्थितवान्।

"इतोऽपि कानिचन जन्मानि यावत् एतेषां पापं न नश्यति। भविष्यत्काले भवतः पौत्रद्वारा एतेषां मोक्षप्राप्तिः भविष्यति" इति



कपिलमुनिः उक्तवान्। अंशुमान् यागाश्वम् आनीय सगराय अर्पितवान्। सगरः अश्वमेधयागं समाप्य, अंशुमन्तं पट्टाभिषिक्तं कृतवान्।

राज्यप्राप्त्यनन्तरम् अपि अंशुमान् सर्वदा स्वीयपितृपादानां मुक्तिविचारम् एव चिन्तयन् आसीत्। एवं हि सति कदाचित् गरुत्मान् तस्य समीपं समागत्य "भवदीयपितृपादानां भस्मराशेः उपरि गङ्गां प्रवाहयितुं प्रयत्नः क्रियते चेत्, तेषां मुक्तिप्राप्तिः भविष्यति" इति उपदिष्टवान्।

भूलोके गङ्गायाः अवतरणार्थं प्रयत्नं कर्तुं निर्धार्य अंशुमान् स्वीयपुत्रं दिलीपं पट्टाभिषिक्तं कृतवान्। अरण्यं गत्वा तपः आचरितुम् आरब्धवान् च। किन्तु तपसः फलप्राप्तेः पूर्वम् एव तस्य आयुः समाप्तम्।

दिलीपस्य शासनानन्तरं तस्य पुत्रः भगीरथः राजा अभवत्। भगीरथः स्वीयप्रपितामहानां दुरवस्थाविचारं ज्ञात्वा, येन केनापि प्रकारेण एतेषाम् उद्धारः साधनीयः इति दृढनिश्चयं कृत्वा, ब्रह्मदेवम् उद्दिश्य तपः तप्तुम् आरब्धवान्।

तस्य भक्तिश्रद्धादिभिः सन्तुष्टः ब्रह्मदेवः प्रत्यक्षः भूत्वा "भवान् धर्ममार्गम् अनतिक्रम्य जीवन् स्वीयाम् इष्टार्थसिद्धिं प्राप्स्यति" इति वरेण तम् अनुगृहीतवान्।

अनन्तरं भगीरथः गङ्गां ध्यायन् दीर्घकालं यावत् तपः तप्तवान्। अन्ते गङ्गादेवी तस्य पुरोभागे आविर्भूय, तस्य प्रार्थनां सावधानतया श्रुत्वा, "यदा अहं स्वर्गलोकतः भूमौ पतिष्यामि तदा मम पतनवेगं सोढुं समर्थः कः अस्ति? महता वेगेन पतनसमये एव भूमिं विदार्य पातालपर्यन्तं मया गन्तव्यं किल?" इति भगीरथं पृष्टवती।

"मातः! ईश्वरस्य शरीरे समस्तप्रपञ्चः अन्तर्भूतः अस्ति। अतः सः ईश्वरः एव भवत्याः वेगं सोढुं समर्थः इति अहं भावयामि" इति उक्तवान् भगीरथः।

"यदा अहं भूमिम् आगच्छामि, तदा सर्वे पापिजनाः स्वकीयानि पापानि मम प्रवाहे



क्षालयन्ति। एवंरीत्या मयि यः पापसंग्रहः भविष्यति, तस्य परिहारः कथं भवेत् ?" इति गङ्गादेवी पुनः पृष्टवती।

"देवि, सर्वपापानां परिहारसमर्थः श्रीहरिः भक्तानां हृदयेषु निवसति। तादृशानां पुण्यवतां स्नानेन सर्वाणि पापानि परिहृतानि भविष्यन्ति" इति उक्तवान् भगीरथः।

"सत्यम्। भवता सुष्ठु उक्तम्। भवतः प्रार्थनां पूरयिष्यामि। यदा अहं स्वर्गतः पतिष्यामि, तदा मां सोढुम् ईश्वरस्य अङ्गीकारं भवान् प्राप्नोतु" इति उक्त्वा गङ्गादेवी तिरोहिता अभवत्।

भगीरथः पुनः ईश्वरं ध्यायन् तपः आचरितवान्। तदा ईश्वरः प्रत्यक्षः भूत्वा, भगीरथस्य प्रार्थनां श्रुत्वा, तस्य इच्छानुसारेण कार्यं कर्तुम् अङ्गीकृतवान्।

आकाशतः साक्षात् आगत्य गङ्गा ईश्वरस्य मस्तके एव पतितवती। अनन्तरं शिवस्य जटानां मध्यात् स्रवन्ती भूमेः उपरि अग्रे गतवती। भगीरथः वायुसदृशवेगवन्तं रथम् आरुह्य मार्गं प्रदर्शयन् अग्रे अग्रे गच्छन् आसीत्। गङ्गा तम् अनुसरन्ती, पाताळं प्रविश्य, सगरपुत्राणां भस्मराशेः उपरि प्रवहन्ती अन्ते समुद्ररूपेण स्थितवती। एतेन कारणेन समुद्रस्य सागरः इति नामान्तरम् अभवत्।

स्वायंभूमनोः कालः। तदा कदाचित् षष्टिवर्षपर्यन्तं वर्षाभावात् लोके अत्यन्तभयङ्कर-परिस्थितिः समुत्पन्ना। एतया अनावृष्ट्या महान् जनक्षयः जन्तूनां क्षयः च अभवत्। लोकजीवनम् अस्तव्यस्तं जातम्। तत् दृष्ट्वा ब्रह्मा समीचीनरीत्या प्रपञ्चस्य शासनं कर्तुं समर्थं कश्चित् महाराजं कर्तुं निश्चयं कृतवान्। रिपुञ्जयः तादृशः समर्थः इति तस्य भावना अभवत्। ब्रह्मा रिपुञ्जयं दृष्ट्वा "वत्स, भवते प्रपञ्चाधिपत्यं दास्यामि। भवान् दिवोदासः इति नामधेयेन प्रपञ्चं सम्यक् परिपालयतु। वासुकेः कुमारी अनङ्गमोहिनी भवतः पत्नी भविष्यति" इति उक्तवान्।

ब्रह्मदेवस्य वचनं श्रुत्वा रिपुञ्जयः "भोः पितामह! भवता एकः वरानुग्रहः क्रियते चेत्,



अहं भवतः वचनानुसारेण भूभारं वक्ष्यामि। मम शासनसमये ऊर्ध्वलोकसम्बन्धिषु वा अधोलोकसम्बन्धिषु वा कस्य अपि भूलोके वासस्य अवकाशः न भवेत्'' इति उक्तवान्। तथा अस्तु इति अङ्गीकृत्य ब्रह्मदेवः वरानुग्रहपूर्वकं रिपुञ्जयस्य पट्टाभिषेकं समाप्य स्वीयं लोकं प्रतिनिवृत्तवान्। रिपुञ्जयः दिवोदासः इति नाम्ना राजा भूत्वा ''भूलोके देवताः वा पातालवासिनः वा स्थातुं न अर्हन्ति'' इति उद्घोषितवान्।

एतत् उद्घोषं श्रुत्वा प्रपञ्चे तत्र तत्र स्थिताः सर्वे देवाः काशीम् आगत्य विश्वनाथस्य समीपं गतवन्तः। तान् दृष्ट्वा शिवः ''पूर्वं मां पृष्ट्वा एव ब्रह्मदेवः दिवोदासं वरेण अनुगृहीतवान्। अतः वयं सर्वे मन्दरपर्वतं गमिष्यामः'' इति उक्तवान्।

अनन्तरं प्रपञ्चे कुत्रापि देवाः एव न आसन्। सर्वेषु देवालयेषु पूजादयः स्थगिताः। दिवोदासः काशीं राजधानीं कृत्वा अष्टसहस्रवर्षाणि यावत् निर्विघ्नं भूलोकं परिपालितवान्।

एवंरीत्या भूलोके स्वकीयकार्यक्रमाणां स्थगनं दृष्ट्वा देवताः बहु चिन्तिताः भूत्वा ''दिवोदासं राज्यभ्रष्टं कर्तुं कः उपायः अस्ति'' इति स्वीयगुरुं बृहस्पतिं पृष्टवन्तः।

''अग्निः वायुः वरुणः च अस्मदीयाः खलु? ते स्वीयां स्वीयां शक्तिम् उपसंहरन्ति चेत् जीवनयात्रा एव स्थगिता भवति। प्रथमतया अग्निः यथा साहाय्यं निराकुर्यात् तथा प्रयत्नं कुर्वन्तु'' इति देवान् बृहस्पतिः उक्तवान्।

काश्यां सर्वत्र अग्नेः अभावः सञ्जातः। पाकाः स्थगिताः। प्रजानां कष्टं दृष्ट्वा दिवोदासः ''एतत् सर्वं देवानां कुतन्त्रस्य फलम्। एतस्मात् भयं मास्तु। अहं तपः तप्त्वा भवतां कृते अग्निं वायुं वृष्टिं च साधयिष्यामि'' इति प्रजाः उद्दिश्य उक्त्वा तथैव कृत्वा प्रदर्शितवान्। एवंरीत्या देवतानाम् उपायः निष्फलः अभवत्।

किन्तु शिवस्य एव काश्याः वियोगः असहनीयः अभवत्। सः दिवोदासम्

अधिकारच्युतं कर्तुम् अपेक्षितवान्। सः चतुःषष्टिसङ्ख्याकाः सिद्धयोगिनीः आहूय "भवत्यः भिन्नभिन्नवेषैः काशीनगरं गत्वा तत्रत्यानां स्त्रीणां पातिव्रत्यं पुरुषाणां धर्मबुद्धिं च दूषयन्तु" इति उपदिश्य प्रेषितवान्।

सिद्धयोगिन्यः शिवेन उक्तं कार्यं साधयितुम् आरब्धवत्यः। किन्तु अपेक्षितस्य कार्यस्य सिद्धिः न अभवत्। तदा शिवः सूर्यम् उद्दिश्य "भवान् काशीं गत्वा येन केनापि उपायेन दिवोदासं धर्मभ्रष्टं करोतु। एतत् कार्यं भवता अवश्यं साधनीयम्" इति उक्तवान्।

सूर्यः विविधवेषान् धृत्वा काश्याम् अटन् दिवोदासस्य यस्मिन् कस्मिन् अपि कार्ये धर्मलोपः दृश्यते वा इति परिशीलयितुम् आरब्धवान्। किन्तु न केवलं दिवोदासस्य कार्येषु, अपि तु तस्य प्रजानां कार्येषु अपि कुत्रापि अधर्मस्य छायाम् अपि सूर्यः न दृष्टवान्। एवंरीत्या असफलः भूत्वा प्रतिगन्तुम् अनिच्छन् सूर्यः काश्याम् एव स्थितवान्।

अनन्तरं शिवः ब्रह्मदेवम् आहूय- "दिवोदासस्य पतनं साधयितुम् अहं सिद्धयोगिनीः प्रेषितवान्। अनन्तरं सूर्यं प्रेषितवान्। ते सर्वे काश्याम् एव बद्धाः तत्रैव स्थितवन्तः। न प्रत्यागतवन्तः। इदानीं भवता एव कार्यं साधनीयम्" इति उक्तवान्।

ब्रह्मदेवः तस्य वचनम् अङ्गीकृत्य वृद्धब्राह्मणवत् वेषं धृत्वा काशीनगरं गतवान्। राजास्थानं प्रविश्य दिवोदासम् आशीर्वचनानि उक्त्वा "भोः राजन्! भवता अनुमतिः दीयते चेत् अहं काशीनगरे यज्ञान् कारयिष्यामि। किन्तु विश्वेश्वरं विना काशी शोभाहीना अस्ति। अतः शिवम् आनाययति चेत् समीचीनं भवेत्" इति उक्तवान्।

शिवस्य आनयनविचारे दिवोदासः किमपि न उक्तवान्। यद्यपि सः तूष्णीं स्थितवान्, तथापि ब्रह्मदेवः काश्यां दश अश्वमेधयागान् कृत्वा तत्रैव उषितवान्।






# शरीरस्य मूल्यम्

उदयगिरिनगरस्य राजा उदयसेनः। सः धर्मात्मा प्रजावत्सलः च। प्रजानां हितार्थं तेन विविधाः वृत्तयः उपकल्पिताः आसन्। तदनुगुणं आर्थिकव्यवस्था, वस्तुसौकर्यं चापि व्यवस्थापितम् आसीत्। अतः सर्वे स्वयोग्यतानुगुणं कार्यं प्राप्नुवन्ति स्म। दारिद्र्यं तत्र नाम्ना अपि न आसीत्। विकलाङ्गाः वृद्धाः च केचन केवलं भिक्षाटनेन जीवन्ति स्म।

तस्मिन् देशे कश्चन युवकः भिक्षुकः आसीत्। बाल्यतः तेन भिक्षाजीवनम् अभ्यस्तम्। अतः परिश्रमेण कार्यं कर्तुं सः न इच्छति। महाराजस्य शासनतः भिक्षुकाणां सङ्ख्या न्यूना जाता आसीत्। जनाः अपि युवकाय भिक्षां दातुं न इच्छन्ति स्म। अतः तस्य जीवनं कष्टे पतितम्।

एकदा सः प्रातःकालतः मध्याह्नपर्यन्तं भिक्षायाचनं कृत्वा अपि किमपि न प्राप्तवान्। मध्याह्ने आतपेन पीडितः सः राजमार्गे वृक्षस्य छायायाम् उपविष्टवान्। मार्गे गच्छतः सर्वान् दीनतया याचितवान्। किन्तु कोऽपि एतं न लक्षितवान् अपि।

भगवतः नामग्रहणेन वा किमपि लभ्येत इति चिन्तयन् सः भिक्षुकः- "देवाधिदेव ! बुभुक्षितम् अन्नेन अनुगृह्णातु। दीनं माम् उद्धरतु" इति उच्चैः प्रार्थितवान्।

जनाः तु स्वस्वकार्येषु व्यापृताः एतस्य प्रार्थनाम् आक्रोशनं वा न श्रुतवन्तः। तदा सः युवकः भिक्षुकः देवस्य विषये एव कुपितः अभवत्।

"अये भगवन् ! भवान् तु वञ्चकः। भवता एव सृष्टः अहम्। मां बुभुक्षितं ज्ञात्वा अपि तूष्णीं तिष्ठति। भवान् न जगदीश्वरः, न वा जगत्पालकः। हा ! धिक्" इति स्वेच्छया भगवन्तं निन्दितवान्।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

तत्समये महाराजः तेन मार्गेण आगतवान्। भिक्षुकस्य व्यर्थालापं श्रुत्वा सः अश्वं स्थगितवान्। अश्वात् अवतीर्य भिक्षुकसमीपं गत्वा पृष्टवान् च- "भवान् कम् एवं निन्दति? तत् किमर्थम्?" इति।

"धिगस्तु भगवतः। सः वराकः कृतघ्नः बधिरः च" इति कोपेन उक्तवान् युवकः भिक्षुकः।

"भगवता कः अपराधः कृतः?" इति पृष्टवान् महाराजः।

"कः अपराधः कृतः इति? प्रातः आरभ्य मार्गे मार्गे अटितवान्। तथापि भोजनं किं, वराटिका अपि न लब्धा।"

"भवान् धनम् इच्छति वा? तर्हि एवं करोतु। अहम् एतस्य देशस्य राजा। भवान् भवतः एकं हस्तं ददातु। सहस्रं रूप्यकाणि ददामि।"

"हस्तं दत्त्वा अहं कथं जीवेयम्?"

"अथवा एवं करोतु। एकं पादं ददातु। द्विसहस्ररूप्यकाणि ददामि। नेत्रद्वयं दत्तं चेत् अर्धं राज्यम् एव ददामि।"

"अङ्गानि कथं दातुं शक्यते? तानि मम प्राणभूतानि। अङ्गानि दत्त्वा प्राप्तेन धनेन मम किं प्रयोजनम्?"

"एवं तर्हि भवान् भाग्यशाली एव। एकैकम् अङ्गम् सहस्रात् अतिशेते। नेत्रद्वयं तु अर्धराज्यात् अतिशेते। एतानि सर्वाणि भगवता एव करुणया दत्तानि किल? एतदर्थं भवता सः पूजनीयः। उपकारस्मरणं विना भवान् तं निन्दति किल? पशवः अपि कृतम् उपकारं न विस्मरन्ति। पशूनाम् अपेक्षया अपि भवान् हीनः वा? उत्तिष्ठतु। अमूल्यानां हस्तपादादीनाम् अङ्गानां साहाय्येन आहारं सम्पाद्य जीवतु" इति उक्त्वा महाराजः ततः गतवान्।

तत्क्षणतः एव भिक्षुकः भिक्षावृत्तिं परित्यक्तवान्। परिश्रमेण आहारं सम्पादयन् सुखेन जीवितवान् च।





# कुब्जः मान्त्रिकः

शौरिराजः चतुर्विंशतिवर्षीयः सुन्दरः युवकः। पित्रार्जितम् ऐश्वर्यं तस्य किमपि नास्ति। किन्तु उत्तमे उद्योगे सः नियुक्तः आसीत् इत्यतः तदीयं जीवनं सुखमयम् आसीत्।

एकदा सः कार्यालयकार्यार्थं पार्श्वग्रामं गतवान्। यदा गृहं प्रत्यागतवान् तदा कर्मकरी उक्तवती- "वीणावती भवन्तं द्रष्टुम् इच्छति। मन्दिरसमीपम् आगन्तुं सूचितवती" इति।

वीणावती शौरिराजस्य भाविनी पत्नी। सा पितुः एकला पुत्री। शौरिराजस्य गृहस्य पार्श्वे एव तस्याः अपि गृहम्। शौरिराज-वीणावत्योः मैत्री बहोः कालतः अनुवर्तते। विवाहमुहूर्तस्य निश्चयः केवलम् अवशिष्टः अस्ति।

'वीणावती मन्दिरसमीपम् आगन्तुं किमर्थम् उक्तवती?' इति न ज्ञातवान् शौरिराजः। यदि किमपि विशेषतया वक्तव्यं स्यात् तर्हि सा एतस्य गृहम् आगत्य एव वक्तुम् अर्हति। एवं स्थिते अपि सा किमर्थं मन्दिरसमीपम् आगन्तुं सूचितवती ?

मन्दिरसमीपे वीणावती शिलायाः उपरि उपविष्टा आसीत्। शौरिराजम् आगच्छन्तं दृष्ट्वा उत्थाय सा समीपम् आगतवती। शिरः अवनमय्य स्थितवती च। शौरिराजः मन्दहासं प्रकटयन् पृष्टवान् -"कापि विशेषवार्ता अस्ति वा ? भवत्याः पिता किम् आवयोः विवाहमुहूर्तं निश्चितवान् ?" इति।

उद्गच्छन्तं दुःखम् अन्तः निगृह्य वीणावती भारभूतेन स्वरेण उक्तवती- "आं, परश्वः एव विवाहः भविष्यति। किन्तु वरः भवान् न, अपि तु अन्यः" इति।

चकितः शौरिराजः पृष्टवान्- "किम् ? किं प्रवृत्तम् ? वदतु" इति।

वीणावती प्रवृत्तं सर्वं निवेदयन्ती उक्तवती-



"ह्यः पितुः बाल्यस्नेहितः मम गृहम् आगतवान्। सः तु नौकावाणिज्येन कोटिशः धनं सम्पादितवान् अस्ति। तेन सह तदीयः पुत्रः अपि आगतवान्। सः पुत्रः मम सौन्दर्येण आकृष्टः अभवत्। मां परिणेतुम् इच्छां प्रकटितवान्। परश्वः उत्तमः मुहूर्तः अस्ति। अतः पिता तं मुहूर्तं निश्चितवान्। परश्वः सः युवकः मां परिणेष्यति" इति।

क्षणकालानन्तरं सा पुनः उक्तवती- "तयोः गमनानन्तरम् अहं मम असम्मतिं प्रकटीकृतवती। तदा मम पिता मां निन्दन् उक्तवान्- 'शौरिराजस्य समीपे किम् ऐश्वर्यम् अस्ति? उद्योगः अपि न स्थिरः। एतादृशेन उद्योगेन निराशां प्राप्तवतां बहूनां परिचयः अस्ति मम। मम मित्रस्य समीपे तु कोटिशः ऐश्वर्यम् अस्ति। भवती यदि मम मित्रस्य पुत्रं परिणेतुं निराकरोति तर्हि अहम् एव गृहं परित्यज्य गच्छेयम्' इति।"

"एवं वा? अहं भवत्याः पित्रा सह वार्तालापं करिष्यामि" इति क्रोधेन उक्तवान् शौरिराजः।

वीणावती तत् निराकुर्वती उक्तवती- "मास्तु भोः। मम पिता महाकोपनः। यदि एतद्विषये वादविवादः प्रवृत्तः भवेत् तर्हि सः गृहं परित्यज्य गच्छेत् एव" इति। अनन्तरं सा मौनं स्वगृहं गतवती च।

एतदनन्तरं शौरिराजः बहु कालं यावत् चिन्तामग्नः सन् तत्र एव उपविष्टः आसीत्। रात्रौ गृहं प्रतिगन्तुं तस्य इच्छा नास्ति। अन्ते सः मनसि किमपि निश्चित्य झटिति उत्थाय प्रस्थितवान् एव।

मन्दिरं पर्वतस्य उपरि अस्ति। पर्वतस्य पार्श्वे चतुर्णां योजनानां दूरे घनारण्यम् अस्ति। जनानां विश्वासः आसीत् यत् तस्मिन् अरण्ये स्वभावतः क्रूराः अटविकाः निवसन्ति इति। शौरिराजः अग्रे गच्छन् तत् अरण्यं प्रविष्टवान्। किञ्चिद्दूरं यावत् सः गतवान्। तदा एकं कर्कशं ध्वनिं श्रुतवान्- "कः भोः भवान्?" इति। चकितः शौरिराजः तत्रैव मौनं स्थितवान्।

अटविकौ शूलायुधं प्रदर्शयन्तौ तस्य समीपम् आगत्य "कः भवान्? अस्यां रात्रौ अरण्ये अत्र भवतः किं कार्यम्?" इति पृष्टवन्तौ।

शौरिराजः क्षणकालं मौनं स्थित्वा उक्तवान्- "अहं महासङ्कटे पतितः अस्मि। सिंहस्य आहारः भवितुम् इच्छन् एवम् अत्र आगतवान्" इति।

एतत् उत्तरं श्रुत्वा तौ अटविकौ चकितौ। किञ्चिद्दूरं गत्वा परस्परं विचारविनिमयं कृत्वा प्रत्यागत्य तौ उक्तवन्तौ- "ये कष्टे सन्ति तेषां विषये वयं कृपालवः। अत्र कश्चन पिशाचपर्वतः अस्ति। तत्र सदा पिशाचाः निवसन्ति। ते पिशाचाः तदा तदा अस्मान् बहुधा पीडयन्ति स्म। तत्सन्दर्भे कश्चन कुब्जः मान्त्रिकः पिशाचपीडातः अस्मान् रक्षितवान्। सः इदानीं पिशाचपर्वते एव निवसति। भवान् तं पश्यति चेत् साहाय्यं लभ्येत" इति। शौरिराजं मान्त्रिकसमीपं नीतवन्तौ च।

कुब्जः मान्त्रिकः कुटीरात् बहिः अग्निं ज्वालयित्वा तत्पार्श्वे उपविष्टः आसीत्। शौरिराजं दृष्ट्वा सः पृष्टवान्- "द्वादशवर्षाणाम् अनन्तरं कश्चित् मां द्रष्टुम् आगतः। कः भोः भवान्?" इति।

"तात! सङ्कटे पतितः असहायः कश्चन अहम्। अतः एव भवन्तम् अन्विष्य अस्यां रात्रौ अत्र आगतवान्" इति विनयेन उक्तवान् शौरिराजः।

मान्त्रिकः प्रकाशमानं ज्वलन्तम् एकं काष्ठं





स्वीकृत्य तस्य प्रभया शौरिराजं परीक्षादृष्ट्या दृष्ट्वा उक्तवान्- ''वदतु, भवान् कीदृशे सङ्कटे पतितः ?'' इति।

शौरिराजः प्रवृत्तं सर्वं निवेद्य उक्तवान्- ''यदि वीणावती मां न परिणेष्यति तर्हि एषः पिशाचपर्वतः एव मम वसतिस्थानं भविष्यति। वीणावतीम् अहं परिणेतुं यथा शक्नुयां तथा कमपि उपायं मन्त्रं तन्त्रं वा भवान् सूचयतु'' इति।

कुब्जः मान्त्रिकः प्रकाशमानं ज्वलतः अग्नेः उपरि हस्तं प्रसारितवान्। तदा जलेन सिक्तः इव अग्निः सर्वथा शान्तः अभवत्। इदानीं तत्र कृष्णाङ्गाराः केवलं दृश्यन्ते।

मान्त्रिकः एकम् अङ्गारं स्वीकृत्य अभिमन्त्र्य उक्तवान्- ''भोः! भवान् यां परिणेतुम् इच्छति तस्यै एतम् अङ्गारं ददातु। सा एतम् अङ्गारं गुडखण्डम् इव खादतु'' इति।

शौरिराजः मान्त्रिकम् इतोऽपि किमपि प्रष्टुम् उद्युक्तः। तदा मान्त्रिकः ततः उत्थाय कुटीरं प्रविशन्- ''मित्र! व्यर्थप्रश्नेन मां न क्लेशयतु। इदानीम् इतः गच्छतु'' इति उक्तवान्।

शौरिराजः कृष्णाङ्गारं स्वीकृत्य ग्रामं प्रत्यागतवान्। वीणावतीगृहं गत्वा तस्याः प्रकोष्ठस्य वातायनस्य द्वारं मन्दम् अङ्गुल्या ताडितवान्। वीणावती जागरिता एव आसीत्। सा तत्क्षणे वातायनद्वारम् उद्घाटितवती।

शौरिराजः मन्दस्वरेण ताम् उक्तवान्- ''भवती एतं कृष्णाङ्गारं गुडम् इव खादतु। विलम्बं न करोतु। अधिकं किमपि न पृच्छतु च'' इति।

वीणावती अङ्गीकारपूर्वकं शिरः चालितवती। सन्तुष्टः शौरिराजः ततः स्वगृहम् आगतवान्। अनन्तरदिने प्रातःकाले वीणावत्याः गृहे कर्मकरी यदा वीणावतीं दृष्टवती तदा भीत्या चीत्कारं कृतवती। स्वर्णवर्णायाः वीणावत्याः शरीरेण इदानीं कृष्णाङ्गारस्य वर्णः प्राप्तः आसीत्।

अचिरात् एव समग्रे ग्रामे एषा वार्ता प्रसृता। वरपक्षीयाः एतां वार्तां श्रुत्वा वीणावतीं द्रष्टुम्

आगतवन्तः। "कीदृशं विचित्रम् एतत्! एषा वधूः अस्मभ्यं मास्तु एव। एतस्यां वर्णपरिवर्तनसमर्थस्य पिशाचस्य अंशः प्रविष्टः अस्ति" इति उक्त्वा ततः गतवन्तः।

वीणावत्याः पिता इदानीं किङ्कर्तव्यतामूढः। सः निराशया आक्रन्दनं करोति। बहुधा चिन्तनेन अपि सः न ज्ञातवान् यत् एतत् कथम् एव जातम् इति।

एतदनन्तरं सः वीणावत्याः पिता कार्यालयं गच्छन्तं शौरिराजं प्रार्थितवान्- "भवान् मम पुत्रीनिमित्तं प्राणान् त्यक्तुम् अपि सिद्धः इति अहं जानामि। कश्चित् मम पुत्र्याः उपरि मन्त्रप्रयोगं कृतवान्। पूर्वं यत् प्रवृत्तं तदर्थं मां क्षाम्यतु। श्वः निश्चिते मुहूर्ते भवान् एतां परिणयतु। माम् उद्धरतु च" इति।

"भवतः अपमाननं ममापि अपमाननम् एव। अवश्यम् अहं श्वः तां परिणेष्यामि" इति उक्तवान् शौरिराजः।

वीणावती द्वारस्य पृष्ठतः स्थित्वा सर्वं श्रुतवती आसीत्। सा शौरिराजम् उक्तवती- "शौरिराज! कुरूपिणी अहं भवतः अनुरूपा न" इति।

शौरिराजः मन्दहासं प्रकटयन् मौनं स्थितवान्। सायङ्कालानन्तरम् अरण्यं प्रति गतवान्। रात्रौ मान्त्रिकसमीपं प्राप्तवान् च।

शौरिराजं दृष्ट्वा मान्त्रिकः उत्साहपूर्णेन



स्वरेण पृष्टवान्- "अये मित्र! अस्माकम् उपायः फलितः वा?" इति।

"कुतः वा न फलेत्? वरपक्षीयाः भीत्या धावितवन्तः। श्वः वीणावत्याः मम च विवाहः प्रचलिष्यति। ह्यः यः मन्त्रः प्रयुक्तः तस्य निवारणार्थं कमपि उपायं सूचयति चेत् अहं कृतार्थः भवेयम्" इति उत्साहेन उक्तवान् शौरिराजः।

"प्रयुक्तस्य मन्त्रस्य निवारणार्थं कोऽपि उपायः मम समीपे नास्ति किल?" इति उक्तवान् मान्त्रिकः।

चकितः शौरिराजः व्यथया पृष्टवान्- "एवं तर्हि वीणावती आजीवनं कृष्णवर्णीया एव तिष्ठेत् वा?" इति।

"तथा अस्ति चेत् का हानिः ? भवान् तस्यां प्रीतिमान् अस्ति एव। सा न परिवृत्ता, केवलं तस्याः वर्णः परिवृत्तः। तत्कारणतः भवान् तां परिणेतुं सङ्कोचम् अनुभवति ? एवं तर्हि अन्यां काञ्चित् सुन्दरीं परिणेष्यति चेदेव वरं खलु ?" इति मान्त्रिकः पृष्टवान्।

एतत् श्रुत्वा दुःखपूर्णेन स्वरेण शौरिराजः उक्तवान्- "तात ! वीणावती कुरूपिणी इति कारणतः तां न परिणेष्यामि इति न चिन्तयतु। वस्तुस्थितिः एषा यत् वीणावती आत्मानम् अयोग्यां मत्वा खेदम् अनुभवन्ती अस्ति। अथवा भवान् एवं करोतु। पूर्वतनेन मन्त्रेण माम् अपि कुरूपिणं करोतु। तदा आवयोः वर्णः समानः भविष्यति। वीणावत्याः दुःखम् अपि न्यूनीभविष्यति" इति।

"मित्र ! भवतः प्रेम वस्तुतः श्रेष्ठम्। परीक्षार्थम् अहम् एवम् उक्तवान्" इति उक्त्वा मान्त्रिकः एकं बीजपूरफलम् अभिमन्त्र्य शौरिराजस्य हस्ते दत्त्वा उक्तवान्- "एतं फलं भवतः भाविनी पत्नी वीणावती खादतु। तेन सा पूर्वतनं वर्णं प्राप्नोति" इति।

फलं स्वीकुर्वन् शौरिराजः उक्तवान्- "तात ! विवाहानन्तरम् अहं पत्न्या सह अत्र आगत्य भवतः आशीर्वादं प्राप्स्यामि। भवतः उपकारम् आजीवनं स्मरिष्यामि" इति।

एतत् श्रुत्वा असमाधानं प्रकटयन् मान्त्रिकः उक्तवान्- "मां मम उपकारं च भवान् विस्मरतु। कस्यापि समीपे मम नामप्रस्तावम् अपि न करोतु। कदापि मम समीपं न आगच्छतु च। अस्मिन् अरण्ये मुग्धजनानां मध्ये मां निश्चिन्तं जीवितुं त्यजतु। इदानीं भवान् गच्छतु" इति।

शौरिराजः गृहं प्रत्यागतवान्। मान्त्रिकतः प्राप्तं फलं वीणावत्यै दत्तवान्। तस्य फलस्य खादनेन सा पूर्वतनं सुवर्णवर्णम् एव प्राप्तवती।

अनन्तरदिने विवाहमण्डपे शौरिराजस्य पार्श्वे उपविष्टां अपूर्वसुन्दरीं वीणावतीं दृष्ट्वा सर्वे ग्रामीणाः आश्चर्यचकिताः।



# अविवेकिता

सुरेन्द्रः नाम राजा स्वकीयं कुमारं विद्याभ्यासार्थं श्रीकर्णनामकस्य पण्डितस्य गुरुकुलं प्रेषितवान् ।

एकवर्षानन्तरं सुरेन्द्रः गुरुकुलं द्रष्टुं गतवान् । तत्र सः 'पुत्रस्य अध्ययनं तृप्तिकरं नास्ति' इति भावनां प्राप्तवान् ।

एतं विषयं श्रीकर्णस्य समीपे प्रस्तुत्य राजा उक्तवान्- "गुरुवर्य ! मम पुत्रं वर्षत्रयाभ्यन्तरे पण्डितं कर्तुं न शक्नोति वा ? यावच्छीघ्रं सः पण्डितः भवेत् इति मम अपेक्षा" इति ।

तदा श्रीकर्णः विद्याभवनस्य निर्माणार्थम् आनीताः शिलाः, शिलाखण्डान् च प्रदर्शयन्- "महाराज ! एतासां सामग्रीणाम् उपयोगेन समीचीनं भवनं निर्मातव्यं चेत् न्यूनातिन्यूनम् एकवर्षं अपेक्षितम् एव । किन्तु लघुकुटीरं तु सप्ताहाभ्यन्तरे निर्मातुं शक्नुमः । अतः अस्माभिः भवनं निर्मातव्यम् उत कुटीरम् इति पूर्वम् एव निश्चेतव्यम् । तदनुगुणं प्रयत्नः करणीयः च" इति उक्तवान् ।

एतत् वचनं श्रुत्वा राजा आत्मनः अविवेकितां ज्ञातवान् । 'मम पुत्रस्य विद्याभ्यासः इतरच्छात्राणाम् इव यथाकालं प्रचलतु' इति आदिश्य गुरुं श्रीकर्णं पारितोषिकादिना सत्कृत्य राजधानीं प्रत्यागतवान् ।





# चाणक्यकथा

(गतसञ्चिकायाः कथायाः उत्तरार्धम्)

चाणक्यचन्द्रगुप्तौ नन्दस्य राजभवने स्थितां सम्पत्तिं वशीकृत्य पर्वतराजाय अर्धभागं दत्तवन्तौ ।

तस्मिन् भवने एका सुन्दरी आसीत् । सा विषकन्या । विषम् एव तस्याः आहारः । तस्याः सौन्दर्येण आकृष्टः पर्वतराजः तां परिणेतुम् इच्छां प्रकटितवान् । चाणक्यः तस्याः विषकन्यात्वं जानन् अपि मौनं स्थितवान् । चाणक्यस्य मौनम् अनुमतिं मन्यमानः पर्वतराजः अग्निसाक्षितया तां परिणीतवान् । यदा तेन तस्याः पाणिः गृहीता तदा स्वेदरन्ध्रद्वारा पर्वतराजे विषांशः प्रविष्टः । वेदनाम् अनुभवन् सः अचिरात् एव मरणं प्राप्तवान् ।

नन्दराज्यस्य अर्धभागस्य अधिकारी पर्वतराजः मृतः इति कारणतः सः भागः अपि चन्द्रगुप्तस्य वशे आगतः ।

नन्दस्य शासनं समाप्तं, सत्यम् । किन्तु नन्दस्य अनुचराः तु राजविरुद्धकृत्येषु मग्नाः सन्तः राज्यपालने शान्तिस्थापने च विघ्नम् उत्पादयन्तः आसन् । एतेषां निग्रहणार्थं योग्यं जनं चाणक्यः यावत् चिन्तयन् आसीत् तावत् सः एकं व्याधं दृष्टवान् । सः व्याधः गृहे यदा पुत्तिकाः पश्यति तत्क्षणे एव अग्निना ताः नाशयति ।

चाणक्यः तं दण्डाधिकारिस्थाने नियोजितवान् । एषः नूतनः दण्डाधिकारी तान् सर्वान् विद्रोहिणः कारागारे स्थापितवान् । विद्रोहं समूलं नाशितवान् च ।

चन्द्रगुप्तस्य कोषागारः इदानीं रिक्तः । 'एतस्य पूरणार्थं कः उपायः ?' इति बहुधा चिन्तितवान् चाणक्यः । करादिसङ्ग्रहणेन यत् प्राप्येत तत् अल्पम् एव । करादीनां वर्धनेन सामान्याः जनाः क्लेशम् अनुभवन्ति अपि ।

"जैनपुराणस्य कथा"

अतः चाणक्यः नूतनम् उपायम् आश्रितवान्। नगरस्य सर्वान् धनिकान् आहूय विशेषभोजनं व्यवस्थापितवान्। भोजनानन्तरं यथेष्टं मद्यं पानार्थं दत्तवान्। यदा सर्वे मदोन्मत्ताः जाताः तदा चाणक्यः आत्मनः वैशिष्ट्यं वदन् 'महाराजः अपि मम वचनं विनयेन अङ्गीकरोति' इत्यादिकं भावं श्लोकरूपेण सरागम् उक्तवान्। तदा इतरे अपि स्वस्वयोग्यतां वदन्तः आत्मनः धनसमृद्धिम् अपि उक्तवन्तः। चाणक्यस्य उपायः फलितः। सः तेषाम् आढ्यतानुगुणं विशेषकरम् आरोप्य, प्राप्तेन धनेन कोषागारं पूरितवान्।

एवं स्थिते कदाचित् चन्द्रगुप्तस्य राज्ये महाक्षामः आगतः। तदा राजधान्यां जैनसंन्यासिनां आचार्यः सुस्थितः स्वशिष्यान् उद्दिश्य- "भवन्तः अन्यत्र गत्वा भिक्षावृत्त्या जीवन्तु" इति उक्त्वा तान् प्रेषितवान्।

सर्वे शिष्याः राजधानीं त्यक्त्वा गतवन्तः। किन्तु उभौ शिष्यौ गुरुसन्निधिं परित्यज्य गन्तुं न इष्टवन्तौ। तौ आहारार्थम् एकम् उपायम् आश्रितवन्तौ। तयोः समीपे एकं विशिष्टम् अञ्जनम् आसीत्। नेत्रयोः तस्य धारणेन तौ प्रतिदिनम् अदृश्यरूपेण राजगृहं प्रविशतः। तत्र चन्द्रगुप्तस्य स्थालिकायां परिविष्टं भोजनपदार्थं मौनं खादित्वा विना शब्दं ततः पलायनं कुरुतः।



किञ्चित्कालानन्तरं चन्द्रगुप्तः कृशः अभवत्। चन्द्रगुप्तस्य कृशतायाः कारणम् अजानन् चाणक्यः तद्विषये तं पृष्टवान्।

"कारणं किम् इति न जानामि। यथावत् सेवकाः भोजनं परिवेषयन्ति। किन्तु परिविष्टाः भोजनपदार्थाः मम उदरं न प्रविशन्ति इति एतावत् एव अहं जानामि। किन्तु ते पदार्थाः कथं कुत्र गच्छन्ति अहं न जानामि" इति उक्तवान् चन्द्रगुप्तः।

'प्रायः कश्चित् अदृश्यरूपेण आगत्य चन्द्रगुप्ताय परिविष्टान् आहारपदार्थान् चोरयति' इति चिन्तितवान् चाणक्यः। वस्तुस्थितेः ज्ञानार्थं सः भोजनशालायां सर्वत्र पिष्टचूर्णानि पातितवान्। चन्द्रगुप्तस्य भोजनानन्तरं यदा



सूक्ष्मतया परिशीलितं तदा अपरिचितानां पादचिह्नानि तत्र अस्पष्टतया दृष्टानि।

अनन्तरदिने चन्द्रगुप्तः भोजनार्थं यदा उपविष्टवान् तदा चाणक्यः मरीचिकादिना कटु गन्धं उत्पादितवान्। तेन गन्धेन सर्वेषां नेत्रयोः अश्रूणि उत्पन्नानि। धाराकारेण प्रसृतानि च। एतया परिस्थित्या आहारं खादितुम् आगतयोः जैनयुवकयोः अञ्जनम् अश्रुधारया क्षालितम् अभवत्। तेन तौ सर्वेषां दृष्टिगोचरौ जातौ। अकस्मात् एतौ संन्यासिनौ दृष्ट्वा सर्वे आश्चर्यचकिताः अभवन्। सेवकाः तु कुपिताः अपि। तदा चाणक्यः तौ जैनसंन्यासिनौ नमस्कृत्य आदरपूर्वकं प्रेषितवान्। 'संन्यसिभ्यः आहारदानस्य पुण्यं भवता सम्पादितम्। अतः चिन्तां न करोतु' इति खिन्नं चन्द्रगुप्तं सान्त्वनम् उक्तवान् च।

अनन्तरं जैनसंन्यासिनाम् आचार्यं प्रति- "भवतः शिष्यौ एवम् अकार्यं कृतवन्तौ" इति आक्षेपवचनानि उक्तवान्।

"अपराधः पौराणाम् एव, न तु मम शिष्याणाम्। भवतः पौराः भिक्षां न दत्तवन्तः इति कारणतः एवं प्रवृत्तम्। यदि पौरैः भिक्षा दत्ता स्यात् तर्हि एवं कथम् अभविष्यत्?" इति उक्तवान् आचार्यः।

तद्दिनात् आरभ्य जैनसंन्यासिनः प्रतिदिनं भिक्षां यथा प्राप्नुयुः तथा व्यवस्था कृता।

'चन्द्रगुप्तं यः कोऽपि विषं भोजयेत्' इति सन्देहः चाणक्यं सर्वदा बाधते स्म। अतः सः चन्द्रगुप्तस्य आहारे प्रतिदिनम् अल्पप्रमाणेन विषं योजयितुम् आरब्धवान्। विषस्य प्रमाणं प्रतिदिनं वर्धितवान् च। एतेन अल्पे एव काले चन्द्रगुप्तस्य उपरि विषं किमपि परिणामं जनयितुं यथा न शक्नुयात् तथा परिस्थितिः आगता।

एकदा आसन्नप्रसवा चन्द्रगुप्तस्य पत्नी दुर्धरा चन्द्रगुप्तस्य स्थालिकायाः पुरतः उपविश्य वार्तालापं कुर्वती, किञ्चित् स्वीकृत्य खादितवती। आहारः विषपूर्णः आसीत् इति कारणतः सा अल्पे एव काले मूर्च्छिता सती प्राणान् त्यक्तु-



वती। तस्याः मरणवार्तां श्रुत्वा चाणक्यः धावन् आगतवान्। गतप्राणायाः दुर्धरायाः शरीरं छेदयित्वा गर्भतः शिशुं बहिः आनीतवान्। किन्तु तावता एव विषस्य एकः बिन्दुः शिशोः शरीरं प्रविष्टम् आसीत्। चाणक्यस्य चिकित्सया शिशोः उपरि विषस्य दुष्परिणामः कोऽपि न जातः। तस्य शिशोः नाम 'बिन्दुसारः' इति निश्चितम्।

चन्द्रगुप्तस्य मरणानन्तरं चाणक्यः बिन्दुसारं सिंहासने उपवेशितवान्। किन्तु हितशत्रोः कस्यचित् कारणतः चाणक्यः बिन्दुसारस्य मन्त्रित्वं बहुकालं न निरूढवान्।

चाणक्यः सुबन्धुनामकं कञ्चित् स्वसमीपे स्थापयित्वा राजकीयतन्त्राणि पाठयित्वा स्वानुचररूपेण योजितवान्। सः एव सुबन्धुः विश्वासद्रोहम् आचरितवान्! यतः सः अपि मन्त्रिपदवीम् इच्छति स्म। अतः सः- "चाणक्ये कदापि विश्वासः न स्थापनीयः। सः भवतः मातुः गर्भं छेदितवान्" इति दुर्बोधनं कृतवान्। एतेन वशीकृतः बिन्दुसारः ज्येष्ठान् एतद्विषये पृष्टवान्। यदा सुबन्धुना उक्तं सत्यम् इति ज्ञातं तदा सः चाणक्यविषये अतीव कुपितः अभवत्। चाणक्यं प्रत्यक्षम् एव सम्यक् निन्दितवान्।

प्रतिस्पर्धिनः जयेन चाणक्यः अतीव निराशः। निराशा क्रमशः वैराग्यभावम् आपन्ना। तथापि सः प्रतिस्पर्धिनः उत्कर्षम् न इच्छति। तदर्थं सः एकम् उपायं चिन्तितवान्। भूर्जपत्रस्य उपरि किमपि लिखित्वा तत् सुगन्धद्रव्यैः सह सुन्दरपेटिकायां स्थापितवान्। तां पेटिकां स्वपेटिकायां संस्थाप्य कीलितवान्। अनन्तरं धनकनकादिसम्पत्तिं दीनदरिद्रेभ्यः मुक्तहस्तं दत्तवान्। ग्रामात् बहिः अवकरराशेः उपरि उपविश्य प्रायोपवेशव्रतम् आचरितुम् आरब्धवान्।

एतेन प्रसङ्गेन बिन्दुसारः चाणक्यस्य वास्तविकं स्वरूपं ज्ञातवान्। पश्चात्तापेन दग्धः सः चाणक्यस्य समीपं गत्वा आत्मनः अपराधं क्षन्तुं प्रार्थितवान्। 'पुनरपि मन्त्रिपदवी स्वीकरणीया' इति प्रार्थितवान् च।

चाणक्यः स्वसङ्कल्पतः च्युतः न जातः प्रायोपवेशव्रतं न परित्यक्तवान् सः। बिन्दुसारः स्वप्रासादं प्रत्यागत्य कोपेन सुबन्धोः उपरि दोषारोपणं कृतवान्। सुबन्धुः आत्मनः निर्दोषित्वं समर्थयन् 'चाणक्यस्य मनः परिवर्तनं करोमि' इति उक्त्वा ततः गतवान्।

चाणक्यस्य समीपं गत्वा बहुविधानि अनुनयवचनानि उक्तवान्। वार्तालापमध्ये सुसमयं प्रतीक्ष्य भस्मावृतं तप्ताङ्गारं अवकरराशौ पातितवान्। एतेन अवकरराशौ महती ज्वाला उत्पन्ना। चाणक्यः उपविष्टः एव अग्निना दग्धः अभवत्।

बिन्दुसारस्य अनुमत्यनुसारं सुबन्धुः चाणक्यस्य गृहं प्रविश्य धनार्थं सर्वत्र अन्विष्टवान्। तदा सः चाणक्यस्य बृहतीं पेटिकां प्राप्तवान्। यदा पेटिका उद्घाटिता तदा तीव्रः सुगन्धः तेन आघ्रातः। भूर्जपत्राणि अपि दृष्टानि। 'चाणक्यस्य ऐश्वर्यस्य सम्बन्धि रहस्यम् अत्र लिखितं स्यात्' इति सः तत्पत्रं लिखितं पठितवान्। तत्र लिखितम् आसीत् यत् असंन्यासी एतस्य गन्धस्य सेवनेन मरणं प्राप्नोति इति। एतस्य सत्यासत्यतां ज्ञातुम् इच्छन् सः कस्मैचित् तं गन्धम् आघ्रापितवान्। सः पुरुषः क्षणद्वयाभ्यन्तरे प्राणान् त्यक्तवान्। औषधदानेन अपि प्रयोजनं न सिद्धम्।

'यदि अहम् अपि एतस्य गन्धस्य सेवनं करिष्यामि तर्हि मम अपि एषा एव गतिः' इति चिन्तयित्वा सुबन्धुः मन्त्रिपदवीं परित्यज्य जैनसंन्यासिनः उपदेशानुसारं संन्यास-धर्मम् आश्रितवान्। 'एषा संन्यासदीक्षा चित्तशुद्ध्या न गृहीता' इति वदन्तः इतरे संन्यासिनः एतं तिरस्कारदृष्ट्या दृष्टवन्तः।

एवं मन्त्रिपदवी अपि हस्तच्युता। संन्यासजीवनेन अपि तेन तृप्तिः न अनुभूता। इतोभ्रष्टः ततो भ्रष्टः सः चाणक्यविरुद्धं कृतस्य तन्त्रोपायस्य फलं प्राप्तुं न शक्तवान् एव। चाणक्यः तु मृतः सन् अपि प्रतिस्पर्धिनः उपरि प्रतीकारं साधितवान्।



पक्षिणः पशवः च –

# टास्मानिया क्रूरप्राणिनः

आस्ट्रेलियादेशस्य आग्नेयदिशि स्थितं टास्मानियाद्वीपं अतीव प्रशान्तम्। अतः अस्मिन् परिसरे विशिष्टाः केचन प्राणिनः टास्मानियावृकाः,टास्मानियाडेविल्, टैगर् क्याट् इत्यादयः निवसन्ति।

एतेषु टास्मानियावृकः आकारेण स्थूलः। इतरवृकाणाम् अपेक्षया वामनः च। शरीरे तत्र तत्र चिह्नानि दृश्यन्ते। वृकस्त्रियः कटिं परितः स्थिते चर्मपटले शिशून् स्थापयन्ति। जन्मसमनन्तरम् एव शिशुः अत्र प्रविशति। प्रवृद्धिं यावत् तत्रैव तिष्ठति च। शैशवावस्थायां सः सर्वदा मातुः स्तनं मुखे स्थापयति। अनन्तरकाले शिशोः आवश्यकतानुगुणं काले माता एव स्तन्यं पाययति। गुहासु निवसन्तः रात्रिसञ्चारशीलाः एते वृकाः पूर्वम् आस्ट्रेलियादेशे सर्वत्र दृश्यन्ते स्म। इदानीं तु केवलं टास्मानियाद्वीपे केवलं दृश्यन्ते।

टास्मानिया डेविल् अपि एतादृशः एव पशुः, यस्य च उदरं परितः चर्मपटलं दृश्यते। शुनकस्य इव एतस्य आकारः।बृहत् शिरः, विशालं मुखं, गोलाकारौ कर्णौ, रोमपूर्णं शरीरं, यमबलं च एतस्य वैशिष्ट्यम्। कण्ठभागे पृष्ठभागे च तत्र तत्र श्वेतकालकाः अपि दृश्यन्ते। एषः रात्रौ आहारं सम्पादयति, यतः दिने सूर्यप्रकाशे द्रष्टुं न शक्नोति। अतः दिने अन्धकारपूर्णायां गुहायां बिलेषु वा एते सुप्ताः भवन्ति। स्वभावेन क्रूराः चेदपि एते सदा क्रीडन्तः सन्तोषेण तिष्ठन्ति इत्यतः केचन एतान् पालयन्ति अपि।

टास्मानियाद्वीपे आस्ट्रेलियादेशे इतरत्र च दृश्यमानः अन्यः क्रूरप्राणी टैगर् क्याट्। एते साधारणमार्जाराः इव दृश्यन्ते। दन्ताः मार्जाराणाम् इव भवन्ति चेदपि न तथा बलशालिनः। धूसरवर्णयुते एतेषां शरीरे तत्र तत्र श्वेतकालकाः दृश्यन्ते। अल्पाकारकौ कर्णौ, दीर्घं पुच्छं, रोमपूर्णं शरीरम् एतेषां वैशिष्ट्यम्।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

| | |
|---|---|
| अञ्जनम् - | Magic ointment |
| अनन्तरीयः - | Next in succession |
| अवकरः - | Dust |
| आणिः - | Nail |
| आन्दोलिका - | Cradle |
| आपणिकः - | Shop-keeper |
| आश्वासनम् - | Assurance |
| आसन्नप्रसवा - | A woman about to deliver |
| इष्टिका | Brick |
| उत्तमर्णः - | Money-lender |
| कर्मकरी - | Maid-servent |
| कालकः - | Mole |
| कुब्जः - | Dwarf |
| कृष्णाङ्गारः - | Charcoal |
| क्रियाशीलता - | Activeness |
| चतुष्पथः - | Circle |
| तप्ताङ्गारः - | Live coal |
| तिरोहितम् - | Disappeared |
| दायित्वम् - | Responsibility |
| निर्निमेषम् - | Without blinking |
| परिखा - | Trench |
| पिष्टचूर्णम् - | Flour |
| पुत्तिका - | White-ant |
| प्रतिरूपम् - | Replica |
| प्राकारः - | Compound-wall |
| प्रायोपवेशनम् - | A kind of religious observance |
| मरीचिका - | Chilli |
| महाकोपनः - | Ill-tempered person |
| म्लानता - | Fading |
| वृकः - | Wolf |
| व्यवहारबाह्यम् - | Counterfeit |
| सान्द्रम् - | Dense |
| स्तन्यम् - | Breastmilk |
| स्थालिका - | Plate |
| हितचिन्तकः - | Well-wisher |
| हेषारवः - | Neigh |

## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

### विजितां शीर्षिकां जून्-८६ मासे प्रकटयिष्यामः।





❀उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀ अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

७३/२, 'अक्षरम्' रङ्गराव्मार्ग, शङ्करपुरम् बेङ्गलूरु–५६०००४

---

**'फेब्रवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम्– नन्दयति नन्दी नन्दनम्।

द्वितीयचित्रम्– नन्दति नन्दी नन्दिना?

**प्रेषिका–** डि. आर्. गायत्री, ४८३, नवमब्लाक्, जयनगरम्, बेङ्गलूरु–५६००६९

---

# भवन्तः जानन्ति वा? (उत्तराणि)

१. कमाण्डर् वीरी। २. अमुण्ड् सेन्। ३. एबेल् टान्मन्। ४. सर् फ्रान्सिस् ड्रेक्। ५. विक्टोरिया जलपातः।

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# जळाभावः किळ भोः!

| | |
|---|---|
| I- किं भोः, महाभाण्डे जळं सङ्गृह्य स्थापितवान् ? | How is it, you have stored water in the tank? |
| II- जळाभावः किळ भोः ? | Isn't there is a severe scarcity for water. You are only two or three, it shouldn't bother you much! |
| I- भवन्तः द्वित्राः केवळम् अत्र सन्ति किळ ? अतः जळाभावः न तथा बाधेत। | |
| II- तथा नास्ति। अस्माकं गृहम् अट्टे अस्ति। नळिकासु जळं तु ५ निमेषमात्रं यावत् आगच्छति। तदपि पर्यायदिनेषु....। | Not so really. We live upstairs. We get water only in drops just for five minutes and that too only on alternate days. |
| I- पर्यायदिनेषु ? कदा आरभ्य ? | On alternate days? From when? |
| II- पञ्चादशदिनेभ्यः एषा व्यवस्था अनुवर्तते। भवान् यत्र निवसति तन्मार्गे मन्त्री निवसति। अतः भवान् जळसमस्यां न अनुभवति। | For the past fifteen days. You live on the street where a minister also lives. So you may not feel the scarcity. |
| I- भवतः गृहस्य कूपः नास्ति वा ? | You don't have a well here? |
| II- नाम्ना अस्ति। किन्तु इदानीं जळं नास्ति। | There is, but there is no water in it now. |
| I- तर्हि अकस्मात् जळसङ्ग्रहः समाप्तः चेत् ? | Supposing the water stored is spent off fully unexpectedly? |
| II- समाप्तं यथा न भवेत् तथा मितव्ययेन व्यवहरामः। तथापि समाप्तम् एव चेत् मित्रगृहतः आनयामि। तत्र अन्तर्जळकूपः अस्ति। | We use it cautiously. Supposing it is finished I get it from my friend's house. They have a bore-well. |
| I- नगरजीवनम् एव कष्टं किळ? जळाभावः, मृत्तैळाभावः, मूल्यवृद्धिः....। | City life is indeed difficult! Water is scarce, kerosene is scarce, expenses are heavy! |
| II- तथापि वयं निश्चिन्ततया जीवामः ! | We carry on nevertheless! |
| I- विषक्रिमिन्यायेन काळानुगुणं सर्वम् अभ्यस्तं भवति। | We get used to them in course of time, as insects infesting poison do. |